Vol. XLV ... y 1962
No. 1 — १८८४ शकीये
४५श-वर्षस्य — वैशाखे
१म-संख्या — यावत्






# संस्कृत साहि... षत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीगोपिकामोहनभट्टाचार्य-न्यायतीर्थः

एम्. ए ; डि. फिल्

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
१६८/१ राजा दीनेन्द्र ष्ट्रीट
कलिकाता—४

वार्षिकमूल्यम्—रूप्यकद्वादशकम्

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushana. Re. 1·25; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 n.P (for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 n.P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 n.P ·62 n.P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 n.P ; ·62 n.P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re, 1·25 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members ).

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

Vol. XLV. No. 1 | १८८४ शकीये वर्षे ४५श-वर्षस्य १म संख्या | May 1962.

## नानाशास्त्रपरमाचार्य्य-भारताचार्य्य-महामहोपाध्याय ✓हरिदास-सिद्धान्तवागीशमहोदयानां-महाप्रयाणमुद्दिश्य स्मृतितर्पणम्

निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः—

हरेर्दासत्वमासाद्य जीवः संमुच्यते भवात् ।
हरिदासस्तु नाम्ना यस्तस्य दिष्टं किमुच्यते ॥१॥

अन्वर्थनाम्ना हरिदासशर्मणा वसुन्धराभीष्टसुतेन सुव्रता ।
मुदान्विता सा मदमानगर्विता स्वर्गं स यातो वसुधां विहाय हा ॥२॥

मर्त्यमस्मिन् मरलोकसंश्रितैः किमल चित्तं, न मृतिर्महाकवेः ।
यतो महाभारतपुण्य-पत्तने यशःशरीरेण सदा सुशोभते ॥३॥

गुणाः प्रतीपा मुदिताः समाश्रिता विद्वद्वरेण्यं गुणराजिराजितम् ।
ऐश्वर्य्ययुक्ते भगवत्यधोक्षजे यथा विरुद्धा अपि धर्मसञ्चयाः ॥४॥

इयञ्च भूर्भारतवर्षसंज्ञिका व्यासप्रसादात्तु महत्त्वमागता ।
महत्त्वमापादयितुं सुधर्मणः स्वर्गं स नीतो विबुधैः समादृतः ॥५॥

महाकविः शब्दपुराणधर्मविद् योऽतर्पयद् वाक्यरसैर्गृहागतान् ।
समीक्ष्य देवै रसभावलिप्सुभिर्नीतो महात्मा सुरलोकमव्ययम् ॥६॥

शोको न कार्य्योऽस्य वियोगचिन्तया संमोदते यश्च भुवः कथामृतैः ।
महात्मनो जीवहिताय जीवितैः सुखानि दुःखानि समं हि भुञ्जते ॥७॥
नासीद् भयं मृत्युपथप्रयाणे न दीनता वा मनसि प्रतिष्ठिता ।
संसारकृत्यं निपुणं प्रसाधयन् कर्मावसाने चलितः स वीरवत् ॥८॥
आदर्शभूतो भवविग्रहाङ्गने योऽलङ्कृतो धैर्य्यसहिष्णुतागुणैः ।
मनुष्यधर्मापि सुरैः समर्चितः कथं न पूज्योऽत्र गुणानुरागिभिः ॥९॥
शरीरहीनः स कथं प्रपूज्यते मर्त्यैर्मनुष्यैः कुसुमादिभिर्बुधः ।
ग्रन्थस्तदीयो यदि पठ्यते मुदा तदैव पूजा भविता महात्मनः ॥१०॥
आहार्य्यसारो यदि शास्त्रसागरान्मुदं ददात्येव कवेः सुकौमुदी ।
चकोरहार्य्यापि सुधाकराश्रिता चित्तं तु नाकर्षति कस्य कौमुदी ॥११॥

गच्छ त्वं सत्यलोकं प्रतिनियतमथो वन्द्यमानः सुरौघै-
स्तत्रापि प्रीतियुक्तो निवस च मतिमन् भारतीसंकथाभिः ।
किंवा ते वाञ्छितं स्यात् क्षितितलसुरराट् नित्यतृप्तस्य तृप्त्यै
लीनः स्या ब्रह्मभूतः शिवदशिवपदे नित्यसौख्यं लभस्व ॥१२॥

---

# कञ्चुकिस्वरूपविमर्शः

निबन्धकः—श्रीकालीकुमारदत्तशास्त्री, एम्. ए., डि. फिल्., काव्यसांख्यतीर्थः ।

गीर्वाणवाणीगुम्फितेषु नाटकेषु बहुशो दृश्यन्ते केचन राजानुचराः 'कञ्चुकी'ति-व्यपदेशभाजः । तेषामेतादृशव्यपदेशमूलं किल भारतीये नाट्यशास्त्रे उपलभ्यत इति रुचिपतिना स्वीयानर्घराघवटीकायामुक्तमुद्धृतञ्च वचनद्वयम् ।

"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥" इति ।
"जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी ॥" इति च ।

इदं तावदत्रावधेयं यद् वचनद्वयमिदमादिभरतोपज्ञतया टीकान्तरेषु व्यपदिष्टमस्ति। किञ्च, नाट्यशास्त्रस्य ये नाम कतिचन मुद्राधिरोपिता ग्रन्था उपलभ्यन्ते तेषु न वचनद्वयमिदमुपलभ्यते। यच्च कञ्चुकिलक्षणं काव्यमाला-प्रकाशिते नाट्यशास्त्रे वर्तते तस्य पाठस्तु न रुचिपतिधृतवचनाभ्यां सह संवदति। तथाहि—

"ये विद्यासत्यसम्पन्नाः कामदोषविवर्जिताः।

ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः॥" इति काव्यमालाधृतः पाठः। एष तु रामकृष्णकविना प्रक्षिप्तत्वेनावधारितः। काशीसंस्कृत-ग्रन्थमालाप्रकाशिते नाट्यशास्त्रग्रन्थे तु नायं श्लोक उपलभ्यते। शेषोल्लिखित-ग्रन्थयोस्तु एतच्छ्लोकस्थाने—

"ब्राह्मणाः कुशला वृद्धाः कामदोषविवर्जिताः।

प्रयोजनेषु देवीनां प्रयोक्तव्याः सदा नृपैः"रिति पद्यमस्ति।

काशीपुस्तके तु श्लोकेऽत्र "कलादोषविवर्जिताः" इति प्रथमार्धे पाठभेदो दृश्यते। यत्तु भरतकोशे—

"ये विप्रास् सत्यसम्पन्नाः कामदोषविवर्जिताः।

ज्ञानविज्ञानकुशलाः काञ्चुकीयास्तु ते स्मृताः॥" इति

भरतायारोपितं वचनं दृश्यते, तत्तु काव्यमालाग्रन्थस्थवचनस्यैव पाठभेद इति स्फुटतया प्रतिभाति।

"कञ्चुकी अदूष्यजातिः स्त्रीस्वभाव" इत्याहतुर्नाट्यदर्पणकारौ। सिङ्गभूपालस्तु--

"विनयन्धरबाभ्रव्यजयन्धरजयादिकम्।

कार्यं कञ्चुकिनां नाम प्रायो विश्वाससूचकम्" इत्याह।

'ये नित्यं सत्यसम्पन्नाः कामदोषविवर्जिताः।

ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः॥ इति राघवभट्टधृतं मातृगुप्तवचनम्।

"कञ्चुकीया नृपाभ्यासवर्तिनोऽन्तःपुराश्रया" इति,

"अकामा ब्राह्मणाश्चैव कञ्चुकोष्णोषवेलिणः ।

ज्ञानविज्ञानसम्पन्नाः कञ्चुकीयाः स्मृता बुधै "रिति चाह शारदातनयः ।

भासारोपितनाटकेषु दाक्षिणात्यमुद्रितेषु च नाटकेषु प्रायशः "काञ्चुकीयः" इत्येवं पाठो दृश्यते । एतेन "कञ्चुकी", कञ्चुकोयः", "काञ्चुकीयः" इति त्रिधैव निर्वचनमेकस्य कञ्चुकिशब्दस्यैव स्फुटमवभासते । कञ्चुकधारणादसौ कञ्चुकीति च स्पष्टमेव । कञ्चुकस्तु आगुल्फावलम्बी स्यूतप्रावरणविशेष इति नास्ति काचिद् विप्रतिपत्तिः । तथा च कादम्बरी "आगुल्फावलम्बिना नील-कञ्चुकेनाच्छन्नशरीराम्" इति । रत्नावल्यामपि-"अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामन" इति ।

तत्र तावत् कञ्चुकिनमधिकृत्य एता विप्रतिपत्तयो जायन्ते—

(१) अपि नाम कञ्चुकीति राजानुचराणां केषाञ्चन विशेषसंज्ञा आसीदथवा कञ्चुकीति वेशवर्णनमात्रम् ?

(२) अप्येषा संज्ञा भरतसम्मता वा न वा ?

(३) कञ्चुकी पुमान् क्लीबो वा ?

(४) स ब्राह्मणो वा न वा ?

(५) अपि नाम कञ्चुकिना जराजीर्णेनैव भाव्यम्, अथवा स युवापि स्याद् इति ।

कौटिलीयेऽर्थशास्त्रे तु अष्टादशमहामात्रेषु, आभ्यन्तरिकेषु, अन्तर्गृहचरेषु च न कञ्चुकिशब्द उपलभ्यते । आत्मरक्षाप्रसङ्गेषु—

"शयनादुत्थितः स्त्रीगणैर्धन्विभिः परिगृह्येत, द्वितीयस्यां कक्ष्यायां कञ्चुकोष्णोषिभिर्वर्षवराभ्यागारिकै' रिति ग्रन्थ उपलभ्यते । एतेन कौटिलोय-मते कञ्चुकीति वेषवर्णनमात्रमेवेति प्रतिभाति । इतश्च यद्यपि नाट्यशास्त्रे कञ्चुकिलक्षणं विप्रतिपन्नं, तथापि—

"कारुकाः कञ्चुकीयाश्च तथा वर्षवराः पुनः" इत्याद्युक्त्या "कञ्चुकी"ति न वेशवर्णनमात्रं किन्तु राजानुचरविशेषस्य विशेषव्यपदेश इति स्फुटमेव ।

मत्स्यपुराणेऽपि राज्ञामन्तःपुरेषु "शिल्पिनां कञ्चुकिनाञ्च वेश्यानां गृहपञ्चकम्" इति कञ्चुकिनां गृहव्यवस्था दृश्यते। अन्तःपुरिकाप्रसङ्गे" माल्यानुलेपनवासांसि चासां कञ्चुकीया महत्तरिका वा राज्ञो निवेदयेयु" रित्याह वात्स्यायनः। कासुचन भागवतपुराणपुस्तिकासु कञ्चुकिभिर्देवीगृहनयनं रुक्मिण्या वर्णितमास्ते। तस्मात् कञ्चुकीति विशेषव्यपदेश एव, स च भरतसम्मत इति निर्विवादमेव, कौटिलीये देशे काले वा कञ्चुकिशब्दो विशेषवाची तु नासीत्।

कोषग्रन्थेषु "सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते"इति कञ्चुकिनामानि दृश्यन्ते। शब्दरत्नावल्यां पुनः "सौविदल्लक"इत्यधिकं नाम दृश्यते। जटाधरस्तु "महल्लकः" "विदाङ्क"इत्यपि कञ्चुकिनामसु गणयति। सद्धर्मपुण्डरीकग्रन्थेऽपि "वयं हि जीर्णा वृद्धा महल्लका" इति महल्लकशब्द उपलभ्यते। हारावल्यां महाव्युत्पत्तौ च "महल्ल" इत्यपि कञ्चुकिनामतया गण्यते। शब्दमालायान्तु "महल्लिक"इति कञ्चुकिनामभिधानं दृश्यते। हेमचन्द्रस्तु— "मुष्कशून्योऽनुपस्थो यः स्त्रीस्वभावो महल्लिक" इत्याह। तन्मते— 'षण्ढशण्ढो तु सौविदो", "कञ्चुकी जोड्गकतरौ महल्ले पन्नगे विटे।" रभसोऽपि "शण्ढः क्लीबस्तु कञ्चुकी" त्याह। अमरसिंहस्तु वर्षवरं नाम राजान्तःपुरचारिणं शण्ढमाह, पुनः कञ्चुकिनम्। तद्विवृतौ—

"ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः।
जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृता" इत्युद्धृतवान् भानुजिः।

कादम्बर्यामपि "उपरचितस्त्रीवेषभाषेण गृहीतविकटप्रसाधनेन वर्षवरजनेन" इति वर्षवरवर्णनमुपलभ्यते। नाट्यशास्त्रेऽपि—

"विनीताः स्वल्पसत्त्वा ये क्लीबा वै स्त्रीस्वभाविनः।
जात्या न दोषिणश्चैव ते वै वर्षवराः स्मृताः॥" इति ग्रन्थ

उपलभ्यते। तन्मते तु कञ्चुकी वर्षवरादितर एव। रत्नावल्यां भावप्रकाशनेऽपि कञ्चुकिवर्षवरयोर्भेदो दृश्यते। भानुजिदीक्षितस्तु अन्तर्वंशिकेषु कञ्चुकिनां बहीरक्षाधिकृतत्वं वर्षवराणाञ्चात्यन्तान्तर्वर्तित्वमाह। अर्थशास्त्रे पुनर्ये नाम

द्वितीयकक्ष्यावर्तिनः कञ्चुकोष्णीषिणस्तेषां वर्षवरः क्लीव एव। अभ्यागारिक-स्वरूपन्तु तावत् विप्रतिपन्नम्। शारदातनयमते अभ्यागारिकः क्लीव एव। तल्लक्षणं यथा—

"पुंस्त्रीलिङ्गविलुप्ताङ्गाः स्वल्पश्मश्रुस्तनान्विताः।

अभ्यागारा इति ज्ञेया अभ्यागाराधिकारिणः॥ इति। अमरस्तु —"कुटुम्बव्यापृतस्तु यः स्यादभ्यागारिक" इति गृहमेधिनमेव पुमांस-मभ्यागारिकमाह। अर्थशास्त्रीया अभ्यागारिकास्तु कञ्चुकोष्णीषिणः क्लीवा एवेति प्रतीतिरुदेति। नाटकेषु क्लीवः कञ्चुकी नोपलभ्यते। तथाच विक्रमोर्वश्याम्—

"सर्वः कल्ये वयसि यतते लब्धुमर्थान् कुटुम्बी
पश्चात् पुत्रैरुपहितभरः कल्पते विश्रमाय।
अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां
सेवाकाकुः परिणतिरभूत् स्त्रीषु कष्टोऽधिकारः॥ इति यत् कञ्चुकि-वचनम् उपलभ्यते तत् तस्य पुंस्त्वमेव द्रढयति।

एतेषां विशेषपर्यालोचनयैतदेव प्रतिभाति यत् कौटिलीये काले क्लीवानामेव वर्षवराभ्यागारिकाणां कञ्चुकोष्णीषित्वमासीत्। नाट्यशास्त्रीये तु काले वर्षवराः क्लीवा आसन्, अभ्यागारिकास्तु कदाचित् पुमांसोऽपि भवेयुः। गच्छति तु काले त एव वेषवैशिष्ट्यमधिकृत्य कञ्चुकीतिव्यपदेशभाजो बभूवुः, विशेषाश्च राजान्तःपुर-कृतयस्तेषु निहिता आसन्। अत एवास्माभिर्नाटकादिषु पुमांस एव कञ्चुकिन उपलभ्यन्ते, न पुनः शण्ढाः।

डक्टर—मनोमोहनघोषमहोदयस्तु स्वीयनाट्यशास्त्रानुवादग्रन्थे कञ्चुकिन-मर्थशास्त्रवर्णितं सन्निधातारममंस्त। तत्तु न चतुरश्रम्। "सन्निधाता कोषगृहं, पण्यगृहं, कोष्ठागारं, कुप्यगृहमायुधागारं, भाण्डागारञ्च कारयेद्" इत्यर्थशास्त्रम्। नाटकेषु तु न कुत्रापि कञ्चुकिनामेतादृशकर्मसाधकत्वं दृष्टचरम्। यदपि च तेनायुधवाहकत्वं कञ्चुकिन उक्तं तदपि न क्षमम्, उपलब्धेषु नाटकेष्वनुपलम्भात्।

नाटकेषु यद्यपि प्रायशो ब्राह्मणा एव कञ्चुकिनस्तथापि "अदूष्यजातयो" ब्राह्मणेतरा अपि कञ्चुकिपदभाज आसन्निति प्रतीयते नाट्यदर्पणोक्तेः।

यद्यपि नाटकेषु बाहुल्येन जराजीर्णा एव कञ्चुकिन उपलभ्यन्ते, तथापि जराहीनाः कञ्चुकिनोऽपि न दुर्लभाः। दूतवाक्यादिषु भासनाटकेषु केषुचित्, ललितमाधवे कुन्दमालायाञ्च कञ्चुकिनो जराजीर्णत्वं नोपलभ्यते। कालिदास-ग्रथितेषु नाटकेषु मालविकाग्निमित्रे कञ्चुकिनो जीर्णत्वं न दृश्यते। तदितरयोस्तु नाटकयोः कञ्चुकिनौ यद्यपि वृद्धौ तथापि तौ युवकाल एव कञ्चुकि-पदमध्यारूढावित्यत्र नास्ति विसंवादः। नाट्यशास्त्रे तु—

"कञ्चुकी च प्रकर्तव्यो वयोऽवस्थाविशेषतः।

अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत्" इत्यादिना ग्रन्थेन वृद्धस्यावृद्धस्य च कञ्चुकिनो गतिप्रकारो व्याकृतोऽस्ति। तेन च युवापि कञ्चुकी भरतसम्मत एवेति विस्पष्टमेव प्रतिभाति।

अत्र खल्विदं तावत् प्रष्टव्यम्—'यदि नाम युवापि कञ्चुकी भरतसम्मतः स्यात्, किमिति कालिदासोत्तरकालवर्तिषु नाटकेषु यूनां कञ्चुकित्वं विरल-दर्शनं सञ्जातमिति। समाधानमत्र न सुशकं वक्तुम्। समुपलब्धानां नाटकादीनां पर्यालोचनया तु इदमेवास्माकं प्रतिभाति यत्—'राज्ञामन्तःपुरेषु पुंसामनुचराणां सञ्चरणं न शोभनमिति मन्यमानाः केचन पण्डिता वर्षवरादि-दृष्टान्तेन कञ्चुकिनामपि क्लीवत्वं प्रतिपादयामासुरपरे पुनः शास्त्रदृष्ट्या तेषां नपुंसकत्व-स्यानुपलम्भाद्वृद्धत्वमेवाङ्गीकृत्य कथञ्चिदपि समाधातुं कृतयत्ना बभूवुः। अर्थशास्त्रे, कामसूत्रे कादम्बर्यादिग्रन्थेषु च अन्तःपुरेषु कामोपधाशुद्धानां मौलानां कुलक्रमागतानां पुंसामपि नियोगा दृश्यत इति हेतोः प्रागुक्तानां समाधानं न रमणीयम्। वस्तुतस्तु बाणभट्टोत्तरकाले राजान्तःपुरेषु कञ्चुकीति-व्यपदेशभाजो राजानुचरा दुर्लभा एव जाताः। नाट्यादिकर्तृभिस्तु वस्तुतो-ऽलभ्यमानानामपि शास्त्रस्थितिसम्पादनेच्छया कञ्चुकिनां सन्निवेशः कल्पित' इति। विस्तरस्त्वत्र विषयेऽस्माभिः "आओयार हेरिटेज्" (७म खण्डे २य पर्याये १०३-११९ पृष्ठासु) इत्याख्यपत्रिकायां मुद्रिते आङ्गलभाषामये प्रबन्धे समुट्टङ्कितो द्रष्टव्यः।

---

# गीताञ्जलि-प्रतिच्छाया

( रवीन्द्रनाथस्य गीताञ्जलेः संस्कृतानुवादः )

[ अनुवादकः—श्रीकाश्यपकविः ]

( २३ )

तथान्तरालवर्त्मना गुप्तगतिर्न योत्स्यते ।
वसान्तरे गुप्ततया हि सम्प्रति ।
न कश्चन ज्ञास्यति हे न कोऽपि वा वदिष्यति,
विश्वे तव गुप्ततस्करिका,
देशविदेशयोरस्ति कियती मम विहारिका.
सम्प्रति वद, मामकीन-हृदयकोणपदे,
गमिष्यसि प्रकाशतां न चञ्चलयिष्यसि.
तवान्तरालवर्त्मना गुप्तगतिर्न योत्स्यते ।
जाने मम हृत कठिनं,
न योग्यमिह पदार्पणम् ,
बन्धो ! तव समीरणस्पर्शादपि नो भविता,
किन्तु तव कठिनमनसि योग्यद्रवसङ्कुलता ?
स्यान्ममास्ति न साधना
यदि स्तुता कृपाकणा
तदा क्षणेन पुष्पकं
न किं विकाशमेष्यति ?
क्षणेन वा न किं फलं
समुद्गतं भविष्यति ?
तवान्तरालवर्त्मना न योत्स्यते गुप्तगतिः ।

( २४ )

प्रभो ! जीवनेऽस्मिन् न यद्यत्र वारे,
भवत् पुण्यसाक्षात् कृतिं भो लभेय,
न लब्धस्त्वमेवं स्मृतिर्मे तदास्ताम्,
न तद्विस्मृतिः स्यात् सदा स्याञ्च खिन्नः ।
भवे हट्टकल्पे क्षयं सम्प्रयान्तु
मदीयानि यावन्ति तावद् दिनानि
द्विहस्ती च यावद्धनेनास्तु पूर्णा
तथाप्यस्तु चित्ते किमप्याप्यि नेति ।
न तद् विस्मृतिर्मे कदाचित् समास्तां
मनोवेदना मे सदैवास्तु तस्मात ।
यद्यालस्यभरेण मध्यसरणावासादयाम्यासनं
धूलौ वा शयनं तथा विरचयाम्यासाद्य यत्नं बहुम् ।
चेतस्यस्तु तदा समस्तसरणिः शिष्टेति तत्त्वं ध्रुवं
नो तद् विस्मृतमस्तु सर्वसमये तेनास्तु मे वेदना ।
यावदेव हसितं प्रवर्त्तताम्
यावदस्तु मुरलीरुतं गृहे ।
यावदस्तु भवनं प्रसाधितं
तावतापि न गृहं त्वमापितः ।
एतदस्तु चिरमेव मानसे
नो कदापि तदिहास्तु विस्मृतं
तत् कृता सततमेव वेदना
मामके मनसि सम्प्रवर्त्तताम् । ( युग्मकम् )

( २५ )

वीक्षेऽहरहस्त्वदीयविरहो
भुवने भुवने राजति हे ।

धृतवहुरूपं विपिने शैले,
जलधौ नभसि च दीव्यति हे ।
निखिलां रात्रिं प्रतिनक्षत्रं
सुस्थिरनेत्रं नीरवसंस्थः
श्रावणधारा-पल्लवकस्थः
प्रचरति विरहस्तव भुवि हे
अद्य प्रतिगृहममितव्यथिते,
तव सुगभीरो विरह उपैति,
कियति प्रणये कियति च कामे,
कियति दुःखसुखकर्मणि हे ।
जीवनमखिलं नीत्वौदास्यं
कतिगीतस्वरगलितच्चरितः
विरहस्तव खलु भजते पूर्त्तिं
मामक-मानससद्मनि हे । ( क्रमशः )

---

## आयुर्वेदे मनस इन्द्रियत्वे भौतिकत्वे च विमर्शः

( निबन्धकः—श्रीसतीन्द्रचन्द्रतर्कतीर्थ-न्यायाचार्यः )

( पूर्वानुवृत्तः )

तद्गुणान्येवेति—सत्त्वरजस्तमोगुणान्येव इत्यर्थः । सत्त्वबहुलमाकाशमित्या-युक्तत्वात् (शा० १।२०) । गयी तु—"ततो जातानि भूतानि" इति पठित्वा व्याख्याति,—ततः स्वभावादेः निमित्तकारणत्वात् प्रकृतिपरिणामाच्चोपादान-कारणानि, भूतान्याकाशादीनि तद्गुणानि कारणगुणानि । तैश्चेत्यादि—तैराकाशादिभिर्भूतैः, तल्लक्षणः भूतलक्षणः, कृत्स्नः समस्तः, भूतग्रामः स्थावर-जङ्गमात्मकः व्यजन्यत विविधो जनितः । भूतानां पृथिव्यादीनां पुनर्लक्षणं स्थिरगुरुकठिनत्वमित्यादि, तल्लक्षणतश्च स्थावरजङ्गमात्मको भूतग्रामः । तस्य पञ्चमहाभूतारब्धस्य भूतग्रामस्य परस्परोपकार्य्योपकारकत्वेन व्यवस्थितस्य,

उपयोगः, प्रयोजनमभिहितः कथितः। चिकित्सां प्रति रोगापनयनं लक्ष्यीकृत्य, सर्वदा नियते आत्ययिके च काले, कुतः ? यस्मात् तेभ्यः पञ्चमहाभूतारब्धभूतग्रामेभ्यः, परं चिकित्सिते चिन्ता नास्ति। तदुक्तमाद्येऽध्याये "तस्मिन् पञ्चमहाभूतशरीरिसमवायः पुरुषः" ..तस्मिन् पुरुषः प्रधानं तस्योपकरणमन्यत्" ( सू० १।२२ ) इति। तेन पञ्चमहाभूतारब्धस्यैव भूतग्रामस्य चिकित्सोपकरणत्वम्. अतो भूतेभ्यः परं यदव्यक्तादि तत्र चिन्तापि नास्ति इति दर्शयन्नाह—यत इत्यादि।

इन्द्रियाणि श्रवणस्पर्शन लोचन-रसन-घ्राणानि भौतिकानि, ( अत्र मनसो नोल्लेखः )। तथा चोक्तं; पञ्चमहाभूतत्वेऽपि "खं श्रोत्रे स्पर्शने वायुर्दर्शने तेज उत्कटम्। सलिलं रसने भूमिर्घ्राणे तज्ज्ञैर्निरूपितम्" ॥ इति। इन्द्रियाणामर्थाः शब्दस्पर्शरूपरसगन्धाः ते चायुर्वेदशास्त्रे, तथा भौतिका इत्यर्थः, उक्तञ्च—"शब्दो वैहायसः स्पर्शो वायवीयः प्रकीर्त्तितः। रूपमाग्नेयमाप्योऽत्र रसो गन्धस्तु पार्थिवः" इति—( सु० शा० १।१२-१४ ॥ अत्रापि मनोऽर्थस्य नामापि नास्ति )। भवति चात्र—"इन्द्रियैरिन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः। नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥" ( शा० १।१५ )।

अत्र डल्हणः—इन्द्रियाणामिन्द्रियार्थानां च पाञ्चभौतिकत्वेऽपि यस्य भूतस्य यत्र यत्रेन्द्रिये आधिक्यं तेन तेनेन्द्रियेण तस्य तस्यैव गुणाः शब्दादयो गृह्यन्त इति दर्शयितुमाह—इन्द्रियैरित्यादि।

नियतमात्मीयमेव कुत इत्याह—तुल्ययोनित्वादिति—एकभूतहेतुत्वात्, भूतं हि स्वयोनिमेवाभिधावति जलमिव जलम्...। तदेव स्पष्टीकुर्वन्नाह—नान्येनान्यमिति ( अत्रापि मनसः तद्योनेस्तदर्थस्य च नोल्लेखः )। "शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत्। तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे ॥ ( सू० ३०।३ ) ( ड० टी० )—शरीरं पाञ्चभौतिकं प्राणिकायः। शीलं मनसो भावः। अन्ये तु—शीलं समाधानयुक्तं मन इत्याचक्षते।

चक्रस्तु—तत्र प्रथमतः शारीर-मानससकलारिष्टलक्षणमेव तावदाह—शरीरशीलयोरित्यादि। शरीरं प्राणिकायः। शीलं मनोवृत्तिः। शीलेन

च मनो लक्ष्यते, तेन शरीरमनसोरित्यर्थः। अनयोः प्रकृतिः स्वभाव इति ( सु० सू० ३०।३ )।

अत्र मतद्वयेऽपि मनः पाञ्चभौतिकाच्छरीरादन्यदेव। शरीरावयवत्वे हि पृथक् पाठो निरर्थकः। भौतिकत्वे च मनसः शरीरेण गतार्थत्वात् पुनर्मानसारिष्टप्रदर्शनं व्यर्थमेव स्यादिति तु तत्त्वम्।

"पञ्चाभिभूतस्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति।

पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले॥" ( सु० शा० ६।११ )। मनसोऽपीन्द्रियत्वे पाञ्चभौतिकत्वे च स्वीकृते तदत्र कथं परित्यक्तम्? नयस्तुल्य एव। अत्र चेन्द्रिये पञ्चत्वविशेषणाद् भूतसृष्टौ च मनसः सर्व्वथैवोपेक्षणाच्चेन्द्रियेभ्यो नितान्तं वैलक्षण्यमेव सूचयतोश्चरकसुश्रुतयोरैकमत्ये वैपरीत्यं को नाम समुद्भासयितुं शक्नोति पूर्व्वोक्तां च युक्तिं विद्वान्। "समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते"॥ ( सू० १५।४१ ) आत्मा देहः, अन्ये-कर्म्मात्मा पुरुषः। इन्द्रियाणि भौतिकाधिष्ठानशक्तिरूपाणि। मनस्तु इन्द्रियानुग्राहकमन्तःकरणम् ( ड० टी० )। अनेनापि डल्हणव्याख्यानेन मनो नेन्द्रियमिति व्यज्यते।

"अपि च—वैकारिकादहङ्कारात्" इत्यत्र मनस उभयात्मकत्वे सांख्यमते युक्तिः प्रदर्शिता। सूत्रस्थानेऽपि ( ३०।१-२ ) "मनोव्यतिरेकेणेन्द्रियाणां विषयग्रहणाभावा" दित्येवमुक्त्या चोपचारमात्रमिति ध्वनितं डल्हणेन।

वाचस्पतिमिश्रेणापि "उभयात्मकमत्र मनः संकल्पकमिन्द्रियञ्च साधर्म्यात्" ( सां. का. २७ ) इत्यत्र "चक्षुरादीनां वागादीनाञ्च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तः इत्युभयात्मकत्वे युक्तिं समभिधाय "इन्द्रियञ्च साधर्म्म्या"—दितिप्रतीकव्याख्यायां इन्द्रियान्तरैः सात्त्विकाहङ्कारोपादानत्वरूपसाधर्म्म्यमात्रेणेन्द्रियत्वं न त्विन्द्रलिङ्गत्वेनेति रहस्यमुद्घाट्य व्यावहारिकोपचरितमात्रमिन्द्रियत्वमिति सूचितम्। 'सात्त्विकाहङ्कारादिन्द्रियान्तरैः सहोत्पद्यमानत्वेन तथेति गौडपादेनाप्युक्तमिति। ( क्रमशः )

---

१ सात्त्विकाद्यहङ्कारोपादानत्वं च साधर्म्म्यं, न तु इन्द्रलिङ्गत्वं, महदहङ्कारयोरपीन्द्रलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्। तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वं न तु प्रवृत्तिनिमित्तम्। ( सां तत्त्वकौ. २७ )।

# मुक्तधारा

( कविसार्वभौम-रवीन्द्रनाथ-विरचित-'मुक्तधारा'-नाटकस्य संस्कृतानुकल्पनम् )

[ अनुकल्पकः श्रीध्यानेशनारायणचक्रवर्त्ती, साहित्यशास्त्री, एम्. ए. ]

( पूर्वानुवृत्ता )

[ प्रविशति रणजितः खुल्लतातो मोहनगृहाधिपतिर्विश्वजित्। शुभ्रकेशः शुभ्रवेशः शुभ्रोष्णीषः ]

रणजित्—नमस्ते। तात, उत्तरभैरवमन्दिरे पूजानुष्ठाने योगदानार्थं त्वमद्य आगमिष्यसीति नासीन्मे प्रत्याशितम् (!) एतादृशं सौभाग्यम्।

विश्वजित्—अद्य उत्तरभैरवः पूजां न ग्रहीष्यतीति ज्ञापयितुम् आगतोऽस्मि।

रणजित्—तव दुर्वाक्यमिदमद्यास्माकं महोत्सवम्—

विश्वजित्—किमर्थं महोत्सवः! निखिलस्य विश्वेषां तृषितानां कृते देवदेवेन कमण्डलुमध्यात् या खलु जलधारा सर्वतः प्रवाहिता, सा मुक्तधारा कथं युष्माभिर्निरुद्धा ?

रणजित्—अरातिदमनार्थम्।

विश्वजित्—महादेवं प्रति वैराचरणे नास्ति ते भीतिः ?

रणजित्—यः खलु देव उत्तरकूटस्य पुराधिपतिः; अस्माकं विजयेन तस्यैव विजयः। एतदर्थमेव अस्मदीयपक्षम् अवलम्ब्य स देव आत्मनो दानं प्रत्याहृतवान्। तृष्णायाः शूलेन शिवतलं विद्ध्वा उत्तरकूटस्य सिंहासनमूले स निक्षेप्स्यति।

विश्वजित्—तर्हि, युष्माकं पूजनं न तु यथार्थतः अर्चनं, तत्तु वेतनमेव।

रणजित्—तात, परेषां पक्षपाती, आत्मीयविरोधी त्वम्। तवैव शिक्षया अभिजित् स्वराज्यं स्वकीयरूपेण ग्रहीतुं न शक्नोति।

विश्वजित्—ममैव शिक्षया ? नन्वेकदाहं तवैव पक्षे नासम्(?)। प्रजानां सर्वनाशं संसाध्य यदा तु चण्डपत्तने त्वं विद्रोहं सृष्टवान्, स खलु विद्रोहो न खलु मया दान्तः ? अवसाने तु कदा नु बालकोसौ अभिजित् हृदयं मे प्राविशत्—आलोक इव प्रादुर्भूतः। तमसायां(?) दर्शनसामर्थ्याभावात् यान् अहमाहतवान्, पश्चात् तान् स्वजनरूपेण अनुभूतवान्। राजचक्रवर्तिलक्षणं दृष्ट्वा यं त्वं परिगृहीतवान्, उत्तरकूटस्य सिंहासने एव तं निरोद्धुं कामयसे ?

रणजित्—मुक्तधारा-निर्झर-तटे अज्ञातकुलशीलः परित्यक्तश्च अभिजित् समाहृतः—इत्येषा वार्ता तत्सकाशे त्वयैव ननु प्रकाशिता ?

विश्वजित्—बाढं, मयैव प्रचारितः सन्देशः। तस्मिन् दिवसे दीपालिकोत्सवमुपलक्ष्यासौ आसीदस्माकं प्रासादे आमन्त्रितः। गोधूलि-वेलायां गौरीशिखरं प्रति निबद्धदृष्टिरसौ एकाकी अलिन्दे दण्डायमानो मया अवलोकितः पृष्टश्च—"किं पश्यसि, वत्स ?" तेनोक्तं—"ये खलु पन्थानो नाद्यापि रचितास्तेऽपि भाविकालीनाः पन्थानो दुर्गमशैलोपरि सम्भाव्यमाना दृश्यन्ते—दूरं समीपमानेतुं पन्थाः। श्रुत्वा तदैव मे मनसि अजायत—मुक्तधाराया उत्सतटे कापि गृहहीना जननी तम् असूयत(?) कस्तं निरोत्स्यति ? नातःपरं धैर्यधारणे शक्तोहम्; उक्तं मया—वत्स, तव जन्मलग्ने गिरिराजेन पथि एव विरचिता तव अभ्यर्थना, गृहं प्रति नामन्त्रितस्त्वं गृहशङ्खेन।"

रणजित्—अधुना मया सर्वमवगम्यते।

विश्वजित्—किमवगतं त्वया ?

रणजित्—वार्तामिमामाकर्ण्य उत्तरकूटस्य राजगृहात् विच्छिन्नं जातम् अभिजितो ममत्वम्। तदेव स्पर्धया दर्शयितुं स नन्दिसंकटस्य मार्गम् उन्मोचितवान्।

विश्वजित्—तेन का क्षतिः ? यः खलु पन्था उन्मोचितः—स तु सर्वेषामेव—उत्तरकूटस्य शिवतलदेशस्य च।

रणजित्—तात, पितृव्यस्त्वमात्मीयो, गुरुजनश्च; एतदर्थमेतावत्कालं

यावत् रक्षितं धैर्यम्। नातःपरं क्षमोऽस्मि। स्वजनविद्रोही त्वम्, तद् राज्यमिदं परिहाय दूरं गच्छ।

विश्वजित्—नाहं परित्यक्तुं शक्तः। यदि, यूयं मां परित्यजथ, तदाहं तु सहिष्ये। ( प्रस्थानम् )

[ अम्बायाः प्रवेशः ]

अम्बा—( राजानं प्रति ) भोः भोः, के यूयम्? सूर्यस्तु अस्तं गच्छति, किन्तु सुमनो मे नाधुनापि प्रत्यागतः।

रणजित्—अयि, का त्वम्?

अम्बा—नास्ति मे परिचयः। आसीत् यो मे जीवितसर्वस्वम् सोऽसौ अनेन पथा दूरं नीतः। अस्य पथः किं शेषो (?) नास्ति। ननु, किम् इदानीमपि सुमनः प्रचलति, केवलमेव प्रचलति—यत्र गौरीशिखरमुल्लंघ्य पश्चिमायामस्तं गच्छति दिवाकरः, निलीयते आलोकच्छटा—निमज्जति सर्वमेव?

रणजित्—मन्त्रिन्, इयं किम्—

मन्त्री—वाढं, महाराज तद्बन्धनस्य निर्माणार्थम्—

रणजित्—( अम्बामुद्दिश्य ) भद्रे, शोकं मा कुरु। अहं जानाम्येतत्-यत्—पृथिव्यां सर्वेषु चरम यद्दानं, पुत्रेण ते तदेव संलब्धम्।

अम्बा—यदि तदेव सत्यम् अभविष्यत्, तदा तद्दानमानीय स सायंकाले मह्यम् अदास्यत्। ननु तस्याहं जननी।

रणजित्—स हि आनीय दास्यति। असौ सायंकालो नाधुनापि समायातः।

अम्बा—वत्स, सत्यं भवतु ते वचनम्। अहं तदर्थं भैरवमन्दिरस्य पथि पथि प्रतीक्षां करिष्यामि। सुमन! सुमन!

[ प्रस्थानम् ]

[ छात्रसंघेन सह उत्तरकूटस्य प्राथमिकविद्यालयशिक्षक आरात् वृक्षतले प्रविशति। ]

शिक्षकः—वेत्र वेत्रप्रहारं प्राप्स्यथ। समुच्चकण्ठेन उच्यन्तां(?)– विजयतां राजराजेश्वरः।

छात्राः—विजयतां राजरा—

शिक्षकः—( समीपवर्तिनां छात्राणां कतिपयेषु मृदु कराघातं कृत्वा ) जेश्वर।

शिक्षकः—श्रीश्रीश्रीश्रीश्री—

छात्राः—श्रीश्रीश्री—

शिक्षकः—( आहृत्य ) पञ्चवारान्।

छात्राः—पञ्चवारान्।

शिक्षकः—लक्ष्मीभ्रष्टाः, वानराः! उच्यन्तां सर्वे(?)—श्रीश्रीश्रीश्रीश्रे—

छात्राः—श्रीश्रीश्रीश्रीश्री—

शिक्षकः—उत्तरकूटाधिपतिर्विजयताम्।

छात्राः—उत्तरकूटा—

शिक्षकः—धिपतिर्

शिक्षकः—विजयताम्

छात्राः—विजयताम्

रणजित्—युष्माभिः कुत्र गम्यते?

शिक्षकः—अस्माकं यन्त्रराजो विभूतिर्महाराजेनाद्य पुरस्कृतो भविष्यति। अत आनन्दोत्सवार्थं बालकैः सह तत्र गच्छामि। सञ्जाते उत्तरकूटस्य गौरवे शैशवादेव येनैते बालका गौरवमनुभवितुं शिक्षन्ते, एतदर्थमेव न किञ्चिदपि उपलक्ष्यं परिहातुं कामये।

रणजित्—विभूतिना किं कृतमिति ननु सर्वैरेव एभिः ज्ञायते?

बालकाः—( उल्लम्फ्य करतालीं दत्वा ) ज्ञायते; निरुद्धं तेन शिवतलस्य पानीयजलम्।

रणजित्—कथं निरुद्धम्?

बालकाः—( सोत्साहम् ) तान् विपन्नान् कर्तुम्।

( क्रमशः )

---

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 ( for members). Out of stock

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 n.P ·62 n.P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., ·50 n.P

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4·5c n.P ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 n·P ; Re. 1·25 n.P ( for members ).

27. **Manavaka-gauravam**—(Drama) by M M Kalipada Tarkacharya, Rs. 2·50 n.P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya. Rs. 1·50 n.p and 1·25 n.p (for members).

29. **Brahmana-Sarvasva**—(A Pre-Sayana Vedic Commentary) of Halayudha, Ed. Prof. Durgamohan Bhattacharya. Rs. 25/-

---

*Sanskrit Sahitya Parishad Series No. 29*

# BRĀHMANA-SARVASVA

**( A Pre-Sāyaṇa Vedic Commentary )**

*By*

## HALĀYUDHA

EDITED WITH INTRODUCTION, CRITICAL NOTES, INDICES & APPENDICES

*By*

PROF. DURGAMOHAN BHATTACHARYYA

*Price Rs. 25/-*

*Published by :—*
**SANSKRIT SAHITYA PARISHAD**
168/1, RAJA DINENDRA STREET,
CALCUTTA—4.

---

## संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृतसाहित्यपरिषन्नाम तदभिधानायाः परिषदो मासिकी मुखपत्रिकेयमतिगभीरार्था दार्शनिकनिबन्धेषु, परमकोमला काव्यचिन्तासु, धर्म्योपचारा स्मृतिपुराणेतिहासादिषु, सूक्ष्मतत्त्वावेदिका विज्ञानविभवेषु, संस्कृतोन्नतिमूलप्रवृत्तिप्रचारपरा पारिपार्श्विकवृत्तेषु, यथार्थगुणदोषविचारचतुरा ग्रन्थादिसमालोचनेषु गीर्वाणवाणीप्रणयिनामत्युपादेयतया वरीवर्त्ति ।

निबन्धादिकं समालोचनार्थं ग्रन्थादिकञ्च सम्पादकसविधे अधोलिखितसङ्केतानुसारेण प्रेषणीयम् ।

**संस्कृतसाहित्यपरिषत्**
१६८/१, राजा दीनेन्द्र ष्ट्रीट
कलिकाता-४

---

Printed by Bishnupada Bhattacharyya M. A. Kāvyatirtha, at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Calcutta—4.

Vol. XLIV.
Nos. 9-10
४४श-वर्षस्य
९-१०म-संख्या

January-February
1962
१८८३ शकीये
पौषतो माघं
यावत्




# संस्कृत साहित्य परिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीगोपिकामोहनभट्टाचार्य-न्यायतीर्थः

एम्. ए ; डि. फिल्

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
१९८/१ राजा दीनेन्द्र ष्ट्रीट
कलिकाता—४

वार्षिकमूल्यम्—रूप्यकद्वादशकम्

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushana. Re. 1·25; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 n.P ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 n.P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 n.P ·62 n.P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 n.P ; ·62 n.P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re. 1·25 ( for members ).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members ).

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

Vol. XLIV. Nos. 9-10 | १८८३ शकीये पौषे-माघे च ४४श-वर्षस्य ९म-१०म संख्या | January-February 1962.

पण्डितमूर्द्धन्य-डक्टर-**क्षितीशचन्द्रचट्टोपाध्याय**महोदयस्य
लोकान्तरप्रयाणमुपलक्ष्य

## शोकाश्रुप्रस्रवणम्

[ निबन्धकः—महामहोपाध्यायश्रीकालीपदतर्काचार्य्यः ]

यदीय-वैदुष्ययशःकरोत्करै-
र्वसुन्धरासीमसितप्रभां दधौ ।
स कोविदानन्दकरो गुणाकरः
क्षितीशचन्द्रो बत हा गतो दिवम् ॥१॥

मञ्जूषया मञ्जुलवाग्विभूषया
यस्तर्पयामास सना विदां गणम् ।
गीर्वाणवाणीविदुषां महत्तमः
क्षितीशचन्द्रः स गतोऽद्य हा दिवम् ॥२॥

यदीयविश्वोत्तरबुद्धिचातुरी
भाषारहस्यं तरणिस्तितीर्षताम् ।
स देववाणीवरपुत्र उज्ज्वलः
क्षितीशचन्द्रोऽस्तगिरिं समाश्रितः ॥३॥

यत्सेवया संस्कृतपत्रिकाचये
प्रतिष्ठिता कञ्चन कालमन्तरा ।
विदां प्रियाभूत् परिषत्-सुपत्रिका
क्षितीशचन्द्रः स गतोऽद्य हा दिवम् ॥४॥

बहुश्रुतो यः श्रुतिविद्यया स्वया
सुविश्रुतो वङ्गयशोविवर्द्धनः ।
शब्दागमेऽप्यप्रतिमः स कोविदः
क्षितीशचन्द्रः स गतोऽद्य हा दिवम् ॥५॥

यदीयदीप्तप्रतिभा तमस्विनां
तमस्ततिं लोपमवापयद् भृशम् ।
स्वविद्यया विस्मयकृद् विपश्चिताम्
क्षितीशचन्द्रः स गतः सुरालयम् ॥६॥

शीलं विशुद्धं समभून्निरास्पदं
शास्त्रैकनिष्ठास्तमितावलम्बना ।
क्षितीशचन्द्रस्य महाप्रयाणतः
शोच्यां दशामाप्तवती सरस्वती ॥७॥

येनासि हे वाणि ! गता महद् यशः
स्थितासि विश्वोत्तरवित्तशालिनी ।
क्षितीशचन्द्रस्य महाप्रयाणत-
स्तस्याद्य शोकाश्रु विमुञ्च दुर्भगे ! ॥८॥

धन्यासि देवावनि ! यामुपाश्रित-
स्त्वामेष दिव्यप्रतिभो विदां मणिः ।
हा मर्त्यभूमे ! तव दैवतोऽधुना
वसुन्धराख्या नहि योगभागिनी ॥९॥

मृत्युर्ध्रुवो यद्यपि जन्मशालिनां
तथापि हातुं न वयं शुचः क्षमाः ।

ताद्दग्विदां रिक्तपदस्य पूर्त्तये
न कश्चिदन्यः सद्दशो यदीक्ष्यते ॥१०॥
कालेन शोको विलयं प्रपत्स्यते
भवो यथापूर्वमपि श्रये ः गतिम् ।
परं तथाभूतसुधीजनात्ययाद्
भवत्क्षतिर्न प्रतिकारमेष्यति ॥११॥
शोकाश्रुणा बालमनिष्टहेतुना
न तेन ताद्दक् स पुनः प्रलप्स्यते ।
स्वकर्मजं लोकमसौ समाश्रित-
श्चिराय शान्तिं लभतां बुधोत्तमः ॥१२॥

---

## अध्यापकः डः क्षितीशचन्द्र-चट्टोपाध्यायः

[ निबन्धकः—श्रीनिर्मलकान्तिवसुः, एम्. ए । ]

आसीत् कलिकातान्तर्गत-जोड़ासाँकोवास्तव्यो राढी-श्रेणीसम्भवः काश्यप-गोत्रः शरच्चन्द्र-चट्टोपाध्यायो नाम कश्चन ब्राह्मणः । स खलु गिरिबालादेवी-मुपयेमे । तयोः किल पञ्च पुत्रा द्वे तनये च सञ्जाताः । पुत्रेषु ज्येष्ठः क्षितीशचन्द्रः, द्वितीयः श्रीज्योतिषचन्द्रः, तृतीयः श्रीशचन्द्रः, चतुर्थः श्रीपरेशचन्द्रः, पञ्चमश्च सन्तोषकुमारः । कन्ययोर्ज्यायसी सुभाषिणी देवी, कनीयसी सुहासिनी देवी च पूर्वमेव परलोकं गते । श्रीज्योतिषचन्द्र-चट्टोपाध्यायः, बि.ए., भिषगाचार्यः, श्यामबाजारविद्यासागरविद्यालयस्य प्रधानशिक्षकपदमधितिष्ठति ।

१३०३ वङ्गाब्दे अग्रहायणमासस्य दशमे दिने ( १८९६ खृष्टाब्दे नभेम्बर-मासस्य चतुर्विंशे दिवसे ) मङ्गलवारे प्रातः ८-४५मिः समये क्षितीशचन्द्रस्य प्रादुर्भावेण पितृभ्यामननुभूतपूर्व आनन्दसन्दोहोऽनुभूतः । प्रतिपच्चन्द्र इव

क्षितीशचन्द्रः क्रमेण वृद्धिं गतः। पुत्रस्य विनयाधानार्थं पिता कृतसङ्कल्पोऽभवत्। पितुरभिलाषानुसारेण क्षितीशचन्द्र आदौ श्यामबाजार-विद्यासागर-विद्यालयं ततः हेयार-विद्यालयञ्च प्रविष्टः। विद्यालये अध्ययनकाले वात्सरिक-परीक्षास्वसौ विशिष्टं स्थानमधिकृतवान्। तस्य प्रतिभयाऽप्रतिभाः सञ्जातास्तदीयशिक्षकपादाः। उत्तरस्मिन् काले यः प्रतिभामहीरुहः पल्लवितः पुष्पितः फलितश्च तस्य बीजमत्रैव विद्यालय उप्तम्। १९११ खृष्टाब्दे म्याट्रिकुलेशान्-परीक्षामसौ प्रथमविभाग उत्तीर्य वृत्तिमलभत।

अथासौ १९१३ खृष्टाब्दे स्कटिश्चार्च-महाविद्यालयात् आइ. ए.-परीक्षां प्रथमविभाग उत्तीर्णः। १९१६ खृष्टाब्दे सिटि-महाविद्यालयात् बि, ए-परीक्षां संस्कृतविषये (अनार्स्) प्रथमश्रेण्यामुत्तीर्णोऽसौ पदकं प्राप्तवान्। १९१८ खृष्टाब्दे कलिकाताविश्वविद्यालयतः एम्. ए.-परीक्षां संस्कृतविषये ('ख'-शाखायां वेदविभागे) प्रथमश्रेण्यामसावुत्तीर्णः पदकं प्राप्य स्वकीयकुलगौरवमवर्धयत्। पश्चात् 'शास्त्री' 'विद्यावाचस्पतिः' चेत्युपाधिद्वयेनासौ भूषितः। अध्यापकरूपेणार्थोपार्जनस्य कृते एम् ए-परीक्षोत्तरणमपेक्ष्यते स्म। परन्तु. गवेषणामूलक उपाधिर्नैवाल नितान्तमावश्यक इति कृत्वा तत्प्राप्त्यर्थं तेनादौ न चेष्टितम्। कलिकाता-विश्वविद्यालये अध्यापनकाले कस्मिंश्चिदहनि गवेषणामूलकोपाधिहीनत्वात् तं प्रति केनचिज्जनेनाश्रद्धा प्रकटीकृता। तदासौ मानधन ईदृशमपमानं सोढुमक्षमः पश्चिमे वयसि वर्तमानोऽपि डि. लिट्.-उपाधिं प्राप्तुकामो व्याकरणमधिकृत्य "Technical Terms and Technique of Sanskrit Grammar" इत्यनुपमं गवेषणाप्रबन्धं विरच्य कलिकाता-विश्वविद्यालय उपन्यस्तवान्। गवेषणाप्रबन्धपरीक्षार्थं महामहोपाध्यायः डः श्रीगोपीनाथ-कविराजः, डः पि. एल्. वैद्यः, श्रीधरकृष्णवेल्भाल्कारपादः, अध्यापकः लुइ रेणोचरणश्चेति पण्डितचतुष्टयं विश्वविद्यालयेन परीक्षकत्वेन वृतम्। परीक्षणादनन्तरं परीक्षकैरेकमतीभूय भूयः प्रशस्यानुकूलमभिमतं प्रेषितम्। फलतश्च १९४९ खृष्टाब्दे विश्वविद्यालयेन क्षितीशचन्द्राय डि. लिट्.-उपाधिः

प्रदत्तः । उपाधिं प्राप्य क्षितीशचन्द्रो धन्यो जात उत क्षितीशचन्द्रं प्राप्योपाधिर्धन्यो जात इति वक्तुं नालमास्म ।

एम्. ए.-परीक्षामुत्तीर्णः क्षितीशचन्द्रस्तदानीन्तने साउथ्-सुबार्बन्-महाविद्यालये ( आधुनिक आशुतोष-महाविद्यालये ) संस्कृतविभागस्याध्यापक-पदमलंकृतवान् । द्विवर्षैरसौ कलिकाताविश्वविद्यालये तुलनामूलक-भाषातत्त्व-विभागस्याध्यापकत्वेन वृतः । संस्कृतविभागेऽपि तेनाध्यापितम् । पञ्चत्रिंशतं वत्सरान् विश्वविद्यालये तेनाध्यापनमनुष्ठितम् । नासौ केवलं कृती छात्रः, कृती अध्यापकोऽपि । तस्याध्यापननैपुण्यं किमपि वैशिष्ट्यं गाहते स्म । वेदे व्याकरणे च तस्याप्रतिमं पाटवमासीत् । व्याकरणविषये तेन यन्नवीनं तत्त्वजातमाविष्कृतं तस्य तुलना नास्तीति मे निश्चिता मतिः ।

बहव एव भाषास्तेनाधिगताः । वङ्गभाषा, आङ्गलभाषा, संस्कृतभाषा, पालिभाषा, प्राकृतभाषा, जार्मान्भाषा, फरासीभाषा, ल्याटिन्भाषा ग्रीक्भाषा च तेन सुविदिताः । तदीये ग्रन्थागारे आभिर्भाषाभिरन्याभिश्च विनिर्मिता बहवो ग्रन्था विराजन्ते ।

संस्कृतग्रन्थसम्पादनेऽपि तस्य नितरां दाक्ष्यं परिलक्षितम् । रघुवंश-किरातार्जुनीय-भट्टिकाव्यानां महाभाष्य-सिद्धान्तकौमुदी-चान्द्रव्याकरणानां वेदस्य श्रीमद्भगवद्गीतायाश्चांशतः सम्पादनं सविशेषमुल्लेखमर्हति ।

पुस्तकप्रणेतृत्वेनाप्यसौ प्रसिद्धिं गतः । तत्-प्रणीतं "शब्दकथा", "उषार आलो", "नक्षत्रमाला" चेति वङ्गभाषामयं ग्रन्थजातं रसिकजनस्य प्रीतिं वर्धयति । तेनैवोपनिबद्धं "Technical Terms and Technique of Sanskrit Grammar", "Upasarga and other Technical Terms", "Popular Etymology", "Greek Proverbs", "Critical Observations on Ajayapāla's Nānārthasaṃgraha", "The Śivasūtras and the Sanskrit Alphabet" चेति आङ्गलभाषामयं पुस्तकजालं विपश्चितां सुतरामभिमतम् ।

भारतीयसंस्कृतिसम्प्रचारार्थं स्वप्रचेष्टया स्वकीयार्थव्ययेन च तेन काश्चन

पत्रिकाः प्रतिष्ठिताः सम्पादिताश्च। ‘सुरभारती” इति वङ्गभाषामयी मासिकपत्रिका, “Calcutta Oriental Journal” इति आङ्गलभाषामयी मासिकपत्रिका, “मञ्जूषा” ( साप्ताहिकी मासिकी च ) इति संस्कृतभाषामयी पत्रिका च प्रख्यातिं गताः। किञ्च, स आदौ पुणानगरीतः प्रकाशितायाः “Oriental Literary Digest” इति पत्रिकाया अन्यतमः सम्पादक आसीत्। तदनु च स्वयमेकाकयेव स्वीयार्थव्ययेन तस्याः सम्पादनं कृतवानसौ।

संस्कृत-साहित्य-व्याकरणादि-सम्पृक्त-समीक्षणादिकानुशीलनार्थं वङ्ग-भारतीमयी मासिकपत्रिका ( “सुरभारती” ) प्रथमं तेनैव प्रतिष्ठिता। पाश्चात्य-दर्शनादिकमधिकृत्यापि प्रबन्धादयोऽत्र प्रकाशिताः। वङ्गभाषया लिखितासु पत्रिकास्वस्या अनन्यसाधारणत्वे नास्ति काचिद् विमतिः।

कीथ्-भिन्टार्निज्-रेणोप्रभृतयः प्राच्यविद्याविशारदाः पाश्चात्यमनीषिणः “Calcutta Oriental Journal” नाम पत्रिकामधीत्य प्रीतेः परां काष्ठां गताः कण्ठरवेण प्रशस्य तत्रभवते क्षितीशचन्द्रायाभिनन्दनं प्रेषितवन्तः।

संस्कृतभाषायाः संस्कृतसाहित्यस्य च पुष्कलप्रचारार्थं तेन या पत्रिका ( “मञ्जूषा” ) प्रकाशिता सा नूनममूल्यनानारत्न-मञ्जूषैव विराजते। बहुभिराधुनिकैः संस्कृत-साहित्यसाधकैरत्र कविता-नाटक-प्रबन्धादयः प्रकाशिताः। श्रद्धास्पदेन क्षितीशचन्द्रपादेनापि वेद-व्याकरण-काव्यादिक-मवलम्ब्योपनिबद्धा बहवः प्रबन्धा अत्र सन्निवेशिताः। तेषामुत्कर्षोऽप्युल्लेख-योग्यः। तेषु प्रबन्धकारस्य सूक्ष्मबुद्धित्वं स्वकीयचिन्ताशक्तेः सबलत्वं रचनामाधुर्यमलोकसामान्यं वैदुष्यञ्च विदग्धजनस्य दृष्टिं प्रसभमाकर्षन्ति।

विभिन्नानां शिक्षाप्रतिष्ठानानां विभिन्नासु संस्कृतपरीक्षास्वसौ प्रश्नकर्ता परीक्षकश्चाभवत्। कलिकाता विश्वभारती-वर्धमान-गौहाटि-पाटना-आग्रा-पुणा-उत्कलविश्वविद्यालयानां बि. ए. ( पास्‌विषये अनार्सविषये च )-एम्. ए-प्रभृतिपरीक्षास्वसौ संस्कृतप्रश्नं परीक्षणञ्चाकरोत्। किञ्च, तेन ( पि-एइच् डि. ) गवेषणाप्रबन्धोऽपि परीक्षितः। अपि च, ‘वङ्गीय-संस्कृत-शिक्षा-परिषदः’ ‘आसाम-संस्कृत-समिते’श्चासौ प्रश्नकृत् परीक्षकश्चासीत्। किं बहुना,

'पश्चिमवङ्ग-पाब्लिक्-सार्भिस् कमिशान्'-परीक्षायाम् 'असाम-पाब्लिक्-सार्भिस्-कमिशान्'-परीक्षायाञ्चासौ प्रश्नकर्तृत्वेन परीक्षकत्वेन च वृतः।

काश्चन कल्याणकरसंस्थास्तस्य सान्निध्येन सनाथीकृताः। आमृत्यु स खलु 'संस्कृत-साहित्य-परिषदः' सदस्यपदमलंकृतवान्। प्रायः सप्त वत्सरान् तेन 'संस्कृत-साहित्य-परिषत्-पत्रिका'पि सम्पादिता। तेनामरणं 'भाण्डार्कर् ओरियेण्टाल् रिसार्च् इन्स्टिटिउट्' नाम प्रतिष्ठानस्य सदस्यपदं समलंकृतम्। 'वागवाजार रीडिं लाइब्रेरि' नाम पाठागारस्यासौ कञ्चित् कालं सहकारी सभापतिरासीत्।

स्वयमध्ययनेनासौ होमिओप्याथिक्चिकित्साविज्ञाने वायोकेमिक्चिकित्सा-शास्त्रे च व्युत्पत्तिमगात्। तत्कृतया निःशुल्कया चिकित्सया वहवो रोगिण आरोग्यं गताः।

ज्योतिषेऽपि तस्य प्रावीण्यमासीत्। प्रश्नगणनार्थं जन्मपत्रिकाविचारार्थञ्च वहवो विशिष्टा जनास्तस्य सविधं गताः।

पारिवारिकजीवने सामञ्जस्यं विधातुमसौ सततं चेष्टते स्म। दैनन्दिन-जीवनयापनमपि तस्य लक्षणीयतां गतम्। प्रातरुत्थानं तस्य चरितस्यान्यतमं वैशिष्ट्यमभूत्। धर्मे तस्य मतिः, कर्मणि च धृतिरासीत्। प्रत्यहं यथासम्भवं यथाकालं तेन सन्ध्योपासनादिकमनुष्ठितम्। उपनयनादन्यद् दीक्षान्तरमुपनीतस्य नापेक्ष्यत इति तस्य मतिरासीत्। महादेवे तस्य परमा भक्तिरासीत्। एकस्मिन्नहनि 'कस्ते गुरुः' इति पृष्टोऽसौ निजगृहभित्तिस्थितं चित्रगतं महादेवं दीक्षागुरुत्वेन दर्शितवान्।

क्षितीशचन्द्रस्यैक एव सूनुरध्यापकः श्रीविश्वनाथ चट्टोपाध्यायः, एम्. ए., यादवपुरविश्वविद्यालये आङ्गल-विभागस्याध्यापकपदमलंकरोति। क्षितीशचन्द्रस्य द्वे तनुजे। तयोर्ज्यायसी कल्याणीदेवी, कनीयसी च उषादेवी। उषा किल शैशव एवोपरता पितृहृदये शोकशङ्कुं निखातवती।

सुदर्शनः सहृदयः सरलप्रकृतिराचारनिष्ठो लोकोत्तरप्रतिभाधरः कल्याणकृद् दानशीलो विद्याव्यसनी विनयविमण्डितः क्षितीशचन्द्रश्चारित्रमाधुर्येण

विलक्षणतां भजते स्म । तदीयसाहचर्येण प्रकामं प्रीतोऽस्मि । तस्य यशोरा शिर्भ्रमति दिशि दिशि ।

कालस्य दुरतिक्रमत्वादस्माकं दौर्भाग्याच्च १३६८ वङ्गाब्दीय-कार्त्तिकमासस्य द्वाविंशे दिवसे ( १९६१ खृष्टाब्दे नभेम्बरमासस्याष्टमे दिने ) बुधवारे रजन्यां नववादनत ऊर्ध्वमकांडे करोनारि-थ्रम्बोसिस्-रोगाक्रान्तोऽसौ पतिव्रतां पत्नीं श्रीमतीं सावित्रीदेवीं बान्धवजनांश्चापारे शोकसागरे निक्षिप्य कलिकातास्थ-वासभवने ( ८, भूपेन वसु अयाभिनिउ ) तनुमत्यजत् । अस्तं गते क्षितीशचन्द्रे नितरां वीतशोभा सञ्जाता कोविदमण्डलीकुमुद्वती ।

---

# शब्दाचार्य्य-क्षितीशचन्द्रस्य महास्तगमने हृदयोच्छ्वासः

[ निबन्धकः—श्रीश्रीजीवन्यायतीर्थः, एम् ए. ]

( १ )

हा हा हन्त ! कृतान्तवैरमधुना गीर्वाणवाणी-प्रिय-
प्राणानां निधनाय किं न विदधे चन्द्रं क्षितीशं हरत् ।
वज्रप्रायमपायमाशु रचयत् संसारसारक्षये
सामर्थ्यं खलु दर्शयद्विजयते विश्वञ्च निःस्वायते ॥

( २ )

यो विप्रो न हि विप्रियं चरितवांश्चित्तेन कृत्येन वा
काम्यं कञ्चन काञ्चनादिविषयं नाचिन्तयल्लोलुपः ।
'मञ्जूषां' चिरमञ्जुलां निजधनैः सम्पोषयन् शोषय-
न्नात्मानं न हि खिद्यते स्म स महानद्य क्व यातो हठात् ? ॥

( ३ )

सूरिन् सूनृतवाक् चिराय विनयं सूनूपमान् प्रापयं-
श्छात्रान् मुग्धमधुव्रतानिव वचोमाध्वीकमास्वादयन् ।

पुष्पालङ्कृतकुञ्जरूपमसृजस्त्वं विश्वविद्यालयं
सर्वेषामपि गर्वपर्वतसमो हा ! लीयसे क्वाधुना ? ॥

( ४ )

यो ब्राह्मण्यमनन्यमानसगतिः सम्मान्य सौम्यो मुनि-
र्गार्हस्थेऽपि विकाश्य काश्यपसमस्तीव्रां तपस्यां वसन् ।
पाणिन्यागमसिन्धुमग्नधिषणः पाश्चात्यभाषास्वपि
प्रावीण्यं कलयन्नहो कलिहतं कालं विलङ्घ्य स्थितः ॥

( ५ )

हा हन्त ! क्व नु शान्तमद्य सहसा कान्तं निबन्धाङ्कनं
शुष्कव्याकरणस्य भाष्यमथनादुद्भास्य हास्योज्ज्वलम् ।
नानाशब्दविलासलास्यमधुरं सारस्वतं कौशलं
नित्यं लोकविलोचनाग्रनिहितं को नाम हा ! विस्मरेत् ? ॥

( ६ )

आचार्य्यः किल शब्दशास्त्रचतुरोऽप्याश्चर्यतेजस्वितां
विभ्राणो द्विजवंशगौरवधरः सौरद्युता सम्मिताम् ।
स्फूर्जन्मानसकैरवाणि मदयन्नामर्द्दयंस्तामस-
स्तोमं मानवमानवर्द्धनपरः क्वाद्य प्रयातो भवान् ? ॥

( ७ )

हा हा देव ! दिवि प्रवेशसुखमप्यास्ते न ते तृप्तिदं
मञ्जूषां परिहाय नन्दनवनीकुञ्जो न ते रोचते ।
आशीराशिमशेषमद्य वितर श्रीमत्सु पुत्रादिषु
स्याद् येन प्रियकार्यमार्य ! भवतो निर्बाधमाराधितम् ॥

---

# महाकवेः कालिदासस्य जन्मना मैथिलत्वसिद्धिः

[ निबन्धकः—श्रीमहानन्दठाकुरः, व्याकरण-न्याय-सांख्य-
वेदान्ताचार्य-वेदान्तरत्नः ]

महाकविः कालिदासो जन्मना कतमं देशमलञ्चकारेति नेदानीमपि निश्चितं केनचित्, इदानीं तस्य मैथिलत्वसिद्धये युक्तयः प्रदर्श्यन्ते। ताश्च यथा,—महाकवि-समये स्वकीयपरिचयदानं "धर्म्मः चरति कीर्त्तना" दितिस्मरणान्नानेनाकारि, इत्थं सम्प्रदाय एव तदासीत्। अत एव जन्मभूमेर्मातापित्रोश्च नामादिकं नोपनिबद्धं दृश्यते, किन्तु स्वदेशव्यवहारादिना यथासम्भवं सूच्यन्ते। तदनुसारेणैवा-धुनाऽनुसन्धानं क्रियते। "वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां, सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः" इत्यादिबहुपद्यैर्मेघदूते तत्कालीन-महानगर्य्या उज्जयिन्या बहुवर्णनेन "धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्ट-घटकर्परकालिदासाः, ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वर-रुचिर्नव विक्रमस्य" इत्यभियुक्तोक्त्या च विक्रमादित्यसभायां नवरत्नान्यासन्, तेषु कालिदासः श्रेष्ठ इति नाविदितमितिहासविदाम्।

एतेनेदानीन्तनाः केचनोज्जयनीमेव तस्य महाकवेर्जन्मभूमिमुररीकुर्व्वन्ति, तन्न संगतम्, तदा तत्र ये नव विद्वांस आसन्, तेषां समेषां जन्मोज्जयिन्या-मेवासम्भवि। दृश्यते चेदानीं वयमन्यदेशीया अप्यत्र जीवनयात्रानिर्वाहार्थं वसाम इति न तेनोज्जयिनीवर्णनेन तत्रापन्नजीविको न च तत्रत्य एव जन्मनेति निर्णेतुं शक्यः।

इदानीमन्यप्रान्तीया अत्राप्तजीविका अस्या महानगर्य्या वर्णनं कुर्य्युः, न तेन तेषां जन्मभूमिरियं महानगरीति वक्तुं शक्यम्, इति मैथिलत्वसिद्धौ बाधिका युक्तीर्निरस्य साम्प्रतं तत्साधिका युक्तयः प्रदर्श्यन्ते, ताश्च यथा—

कुमारसम्भवादिरचयिता महाकविः कालिदासोऽत्रिमिथिल "मुच्चैठ" ग्रामस्थां जगदम्बां प्रसाद्य वरं लब्धवनिति तत्रैव भग्नावशेषं "कालिदास-चौपाड़ि" नाम्ना प्रसिद्धमिदानीमपि स्थानमस्तीति नाविदितं मैथिलानाम्। तत्समीपग्रामवासिन इदानीमपि तच्चतुष्पाठीस्थमृत्तिकामादाय स्वपुत्रादीना-

मन्त्रारम्भं विदधति। इदानीमपि मिथिलायां कालिदासस्य "आँजीति" नाम्ना प्रसिद्धं चिह्नमस्ति, यस्यान्तरारम्भे मैथिला इदानीमपि तदेव चिह्न-विशेषं प्रथमं लेखयन्ति, पत्रादिलेखने स्वयं लिखन्ति चेत्यापामरप्रसिद्धि-रस्ति मिथिलायाम्। स्वयमपि कविना ग्रन्थादावन्यत्र च मिथिलादेशस्थस्मार्त्त-लौकिकव्यवहारादीनां सूचनमकारि। मिथिलायां पार्थिवशिवलिङ्गपूजन-व्यवहारस्य प्राचुर्य्येण प्रचारः समुपलभ्यते, तस्यामेव पूजायां "ॐ शर्वाय क्षितिमूर्त्तये नमः, ॐ भवाय जलमूर्त्तये नमः" इत्याद्यष्टमूर्त्यात्मक शिव-पूजाव्यवहारः प्रचलितोऽस्ति, तमादायैव शाकुन्तलमङ्गलश्लोके "या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री" इत्याद्यष्टमूर्त्तेः शिवस्य सभ्योद्देश्यकसुखदातृत्वमुक्तम्। इदानीं तत्रत्या मूर्खा अपि शिवपूजनेऽष्टमूर्त्तेः पूजनं कुर्वन्तीति विदितमेव मैथिलाचारविदाम्। एवं मैथिलानां गृहे गृहे चाधुना शालग्रामशिलोपरि विष्णुपूजाया नार्मदादिलिङ्गोपरि शिवपूजनस्य व्यवहारः प्रचलितोऽस्ति तथैव तच्छक्तेश्चार्चा। एवं हरि-हरभेदाभावोऽपि प्रसिद्धोऽस्ति—"अन्तः शाक्ता बहिः शैवाः सभायां वैष्णवा मताः" इति सिद्धान्तादरस्तत्र दृश्यते। एतमेवाचारं रघुवंशाद्यपद्यमङ्गलेन महाकविः कटाक्षयति—"वागर्थाविव संपृक्ता"वित्यादिना। तत्रापि "पार्वतीप-रमेश्वरौ" इतिच्छेदेन शिवकेशवयोस्तच्छक्त्योश्च मङ्गलं विरचितवान्।

तथैव मेघदूतस्य प्रथमपद्ये वस्तुनिर्देशात्मके जगतः सृष्टिस्थितिप्रलयकर्त्तारं भक्ताभीष्टदं भगवन्तं रामचन्द्रं विहाय "जनकतनयास्नानपुण्योदकेषु" इत्येवोक्तवान्। मिथिलैव तत्र भगवत्या जानक्या जन्मभूमिरित्यनुस्मृत्य तथोक्तवान्। एवं शाकुन्तले चतुर्थेऽङ्के "सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायता" मिति महर्षिणा कण्वेनोक्तम्, एतेनापि मिथिलाव्यवहारं कविः सूचयति स्म, इदानीमपि तत्रत्यो व्यवहारः प्रचलितोऽस्ति, यदा कन्यायाः पतिगृहगमनात्पूर्वं कश्चिद् वरपक्षीयस्तस्या गमनानुमतिलाभायागच्छति तदा कन्यापित्रादयः सर्वान् बन्धून् आहूय पृच्छन्ति—"इयं कन्या पतिगृहं गच्छेदिति सर्वेषामनुमतमस्तु" इति।

तथैव शाकुन्तले पुराणेतिहासाधिककथाभागविरचनं कवेरङ्गुलीयकवृत्तान्तस्तेनैव तस्य नाटकस्यातिरम्यता। तत्तमत्स्योदरात्तस्य प्राप्तिः नान्यस्मादित्यपि मैथिलानां मत्स्याशित्वं सूचयति। मालवदेशीयास्तु मत्स्यं नाश्नन्त्येव प्रत्युत "मैथिला मत्स्यभोजिन" इति मैथिलेषु दोषमेवारोपयन्ति।

तथैव विवाहानन्तरं वरवध्वोः स्नातककर्तृकं स्त्रीकर्तृकं चार्द्राक्षतदानं प्रसिद्धमधुनापि, तस्य व्यवहारस्य स्पष्टतयोल्लेखः शिवविवाहे कुमारसम्भवे—"क्लृप्तोपचारां चतुरस्रवेदीं, तावेत्य पश्चात्कनकासनस्थौ। जायापती लौकिकमेषणीयमार्द्राक्षतारोपणमन्वभूता"मिति कुमारसम्भवे सर्गे ७।८८ पद्ये। तथैव "तौ स्नातकैर्बन्धुमता च राज्ञा, पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्। कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम्" इति रघुवंशे ७म सर्गे २८ पद्ये चाजविवाहे कृतोऽस्ति। तथैव तत्र विवाहानन्तरं विवाहशालायामेव श्वशुरगृहे जामातुरवस्थानं मासावधि दृश्यते। महाकविश्च तमेव व्यवहारं कुमारसम्भवे "एवमिन्द्रियसुखस्य वर्त्मनः सेवनादनुगृहीतमन्मथः। शैलराजभवने सहामया मासमात्रमवसद् वृषध्वजः" इति ८म सर्गे २० पद्ये वर्णितवान्। एभिस्तत्तद्ग्रन्थमिथिलाव्यवहारैस्तस्य जन्मना मैथिलत्वसिद्धिर्भवति। एवं दरभंगाराजकीयपुस्तकालये चिरकाललिखित-तालपत्रपुस्तके कुमारसम्भवादिग्रन्थे सर्गान्ते "इति सन्मिश्र-कालिदासविरचिते" इति दृश्यते। "मिश्रोपाधि" धारित्वं पूर्वोत्तरमीमांसाभिज्ञत्वेन प्रसिद्धमस्ति। तदनुसारादेवान्येषामपि केषाञ्चिदासीत्, परन्तु—अन्यस्मिन्नपि मैथिलरचितग्रन्थ एव सच्छब्दोपाधिविशिष्टत्वं दृश्यते यथा—"इति सन्मिश्र-वाचस्पतिविरचिते" इत्यादिना लेखसम्प्रदायेन मैथिलत्वं सिद्ध्यति।

एतेनेदं सूच्यते यन्महाकविसमये स्वदेशव्यवहारस्य लेखेनैव सूचनसम्प्रदाय आसीत्। पश्चाच्च टीकाकारवाचस्पतिसमये गुरोर्जयन्तस्य त्रिलोचनस्य च नाम राज्ञो नृगस्य पत्न्या भामत्या स्वदेशभाषाशब्दस्य च ग्रन्थमध्ये निवेशनं दृश्यते, यथा तेनैव ब्रह्मसूत्रे द्युभ्वाद्यायतनाधिकरणस्थभामत्यां निगडस्य "हड़ी" इति प्रसिद्धमित्युक्तम्। मिथिलायामेव निगडस्य "हड़ी" नाम प्रसिद्धमस्ति,

इत्यलमप्रस्तुतेन। पश्चाच्च ग्रन्थकृद्भिः स्वस्य पूर्णपरिचयोऽदर्शि, इति क्रमो नाविदितं संस्कृतविदुषाम्। उत्तरभारते मिथिलायाः संस्कृतेश्चिरन्तनत्वं बहुविद्वत्प्रसवभूमित्वं च समेषां विदुषां सुविदितमेव, व्यवहारसूचनेन स्वजन्मभूमेः, तात्कालिकप्रधानराजाश्रितत्वेन तत्रापतजीविकेन तस्या उज्जयिन्या वर्णनं नास्मत्प्रतिपक्षत्वमासादयतीति किं बहुना, सर्वथा महाकविः कालिदासमिश्रो मैथिल एवासीदित्यत्र न कोऽपि संशयावसर इति।

---

गदाधरविरचितः

# विवाहवादार्थः

[ सम्पादकः—श्रीहेरम्बनाथचट्टोपाध्यायशास्त्री, एम्. ए. ; डि. फिल् ]

श्रीश्रीदुर्गा।

अथ चरमसंस्कारानुकूलव्यापारो विवाहः। तत्र चरमत्वं स्वावच्छेदकशरीरावच्छिन्नस्वाधिकरणवृत्तिसंस्कारप्रागभावासमानकालीनत्वम्। तेन न नामकरणादावतिप्रसङ्गः। अत्रान्यदीयसंस्कारमादायासम्भववारणाय स्वाधिकरणवृत्त्यन्तम्। अथावच्छिन्नान्तनिवेशाच्च जन्मान्तरीणसंस्कारमादाय नासम्भवः। 'एवमेनः शमं याति बीजगर्भसमुद्भव'मित्यादिवचनप्रतिपाद्यपापविशेषध्वंसात्मकसंस्कारनिवेशादेव स्नानाचमनादिसंस्कारमादाय नासम्भवः। अथ यस्य नामकरणाद्यन्यतमादिकमात्रमेव तस्य तदन्यतमेऽतिव्याप्तिरिति चेन्न सामानाधिकरण्ये स्वभेदस्यापि निवेशात्।

न चैवं 'विवाहमात्रसंस्कारं कुर्याच्छूद्रोऽपि सर्व्वदा'[1] इत्यादिवचनात् संस्कारान्तराप्रसङ्गात्तदीयविवाहेऽव्याप्तिरिति वाच्यम्, तत्तद्वचनैस्तेषां संस्कारे

---

1 'विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा इति ब्रह्मपुराणे। ( स्मृतिचन्द्रिका १, पृः २४ द्रष्टव्यम् )

मन्त्रस्यैव निषेधान्न तु संस्कारस्य, 'शूद्रोऽप्येवंविधः प्रोक्तो विना[2] मन्त्रेण संस्कृत' इति वचनात्। न च तथापि पाणिग्रहसंस्कारमादाय असम्भव इति वाच्यम्, पाणिग्रहणस्य संस्कारान्तरत्वाभावात्। पाणिग्रहणमन्त्रा विवाहकर्माङ्गभूताः। पाणिग्रहणे न कृतन्न' भार्यात्वं किन्तु सप्तमे पदे इत्यादिमनुवचनैर्विवाहस्यैव बोधनात्। द्वितीयादिविवाहे च नारीसंस्कारजनकत्वेऽपि वरनिष्ठसंस्काराजनकतया स्वसमानाधिकरणसंस्कारप्रागभावासमानकालीनतया न द्वितीयादिविवाहकर्तुः प्रथमविवाहेऽव्याप्तिः, पापविशेषध्वंसात्मकस्य प्रथमविवाहेनैव निर्वाहात्। अत जात्या संस्कारमापन्नः सव्यापारोऽत्र विवाहः। अथ कन्यादानमेव विवाहकर्तृत्वम्, विवहति इत्यादौ चाख्यातेन तादृशसम्बन्धेनैवाश्रयत्वं बोध्यते। अतो न दातुर्विवाहकर्तृत्वापत्तिः, न वा तत्र विवहतीत्यादिप्रयोगः। तस्य कन्यादानरूपतैव ; 'ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृते'ति शक्त्यलङ्कृता[4] कन्या यस्मै दीयते स ब्राह्माभिधानो विवाह इति यथाश्रुतार्थः। एवं 'आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम्। आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः'[5]॥ इत्याद्यपि यथाश्रुतं संगच्छते। ब्राह्माद्यष्टविधसंज्ञा तस्यैव मनुवचनैः[6]

---

2 अत्र शूद्रकृत्यतत्त्वम्,

तत्र देवताप्रकाशार्थं ब्राह्मणेन मन्त्राः पाठ्याः।
अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः।
अमन्त्रस्य तु शूद्रस्य मन्त्रो विप्रेण गृह्यते॥

इति वराहपुराणात्।

3 पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥ (मनुसंहितायाम् ७ २२७)

4 याज्ञवल्क्यसंहिता १।५८ द्रष्टव्यम्।

5 मनुसंहितायाम् ३।२७।

6 ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥ मनुसंहितायाम् ३।२१।

प्रतिपादिता च। तेन सम्बन्धेन तादृशदानस्यैव संस्कारजनकतया 'ममेयं भार्या' इत्यादि-स्वीकाराद्यसमर्थस्यापि बालादेर्विवाहे नाव्याप्तिः। अन्यथा तेषां विवाहानुपपत्त्या अशौचव्यवस्थायां स्मार्तादीनां बहुतरलिखनासङ्गतिः[7] स्यात्। कर्मतासम्बन्धेन तद्वत्त्वमेव विवाहकर्तृत्वम्, अत एव 'कन्यापुत्र-विवाहेषु'[8] इत्यादि सङ्गच्छते। न चैतस्य स्वघटितत्वादननुगमः, तादृश-सामानाधिकरण्यकालिकविशेषणतोभयसम्बन्धेन प्रागभाववदन्यत्वस्य निवेशनीय-त्वात्। स्ववृत्तिध्वंसप्रतियोगिकालवृत्तित्व तादृशसामानाधिकरण्योभयसम्बन्धेन संस्कारवदन्यत्वस्य विवक्षणात्। अत एव प्रागभावानङ्गीकारेऽपि न क्षतिः। तादृशान्यत्वावच्छेदकसंस्कारतावच्छेदकावच्छिन्नत्वस्य विवक्षणान्न काप्यनुपपत्ति-रिति संक्षेपः। यत्तु भार्यात्वसम्पादकग्रहणं विवाहः[9], तच्च ग्रहणं ममेयं भार्या इत्याकारकं ज्ञानं तस्य च समवायविषयतयोर्भेदाद् वरकन्ययोर्विवाहकर्तृत्वकर्मत्वे। आच्छाद्येत्यादिस्तु तादृशग्रहणनिमित्तीभूतं कन्याया यत्तादृशं दानं स एव ब्राह्माभिधानो विवाह इत्यर्थः। न च तद्ग्रहणस्य सविषयकतया मदीयत्वा-दावपि सत्त्वादतिव्याप्तिः, मदीयभार्यात्वप्रकारतानिरूपितविशेष्यताया एव कर्मघटकत्वात्। अतएव मुकुटमण्यंशुकादावपि नातिप्रसङ्गः। अथ उदासीनस्य तादृशज्ञानस्य वरनिष्ठसंस्कारजनकत्वेन तादृशत्यागोद्देश्यत्वविशिष्टतादृशज्ञानस्यैव कर्मतासंसर्गेण भार्यात्वसम्पादकत्वात्।

अथ भार्यात्वं विवाहजन्यसंस्कारवन्नारीत्वम्। तथा च तस्य विवाह-घटितत्वेन विवाहस्यापि तद्घटिततया अन्योन्याश्रय इति चेत्, अत्र स्मार्ताः 'भार्यात्वस्य स्वरूपसद्विशेषणत्वेन नेतरेतराश्रयदोष'[10] इति। तस्य च स्वरूप-सद्विशेषणत्वे उपलक्षणविधयाव्यावर्तकत्वेन सम्पादकस्वीकार एव विवाहः।

---

7 रघुनन्दनकृतं शुद्धितत्त्वमनुसन्धेयम् ( पृः ३६६ )।

8 विष्णुपुराणे ३-१३।५।

9 उद्वाहतत्त्वे पृः १।

10 उद्वाहतत्त्वम् पृः ३।

अत्र भार्यात्वनिरूपकसम्पादकतैव स्वीकारे विशेषणं ( न तु विशिष्टत्वेन ? ) । भार्यात्वं प्रकृतज्ञानाविषयोऽपि सम्पादकताव्यावर्त्तकम् ।

यथा धेनुपदशक्यतावच्छेदकं न धानवद्गोत्वं धानकर्मसामान्यत्वगोत्वत्याधान-कर्मविशेषस्थापकम्, गोत्वसमानाधिकरणधानकर्मत्वस्यैव शक्यतावच्छेदकत्वात्, तथेहापि तादृशजन्यतानिरूपितसामानाधिकरण्येनैव जनकत्वेन सम्पादकत्वं वेद्यमित्यर्थः । स्वरूपता विवाहजन्यतारूपविशेषरहितेन विवाहजन्यतावच्छेदकी-भूतसंस्कारनिष्ठविलक्षणधर्मविशेषणत्वेन संस्कारान्तरव्यावर्तकतेत्यर्थः । ब्राह्माद्य-ष्टकन्यागानन्तरतादृशग्रहणमेव इति चेत् तादृशज्ञानासमर्थबालकादेर्विवाहे-ऽव्याप्तिः ।

इति श्रीगदाधरभट्टाचार्यस्य नवद्वीपनिवासिनः । (श्रीश्रीदुर्गा । श्रीश्रीईश्वरः । लिखितं श्रीरमानाथसेनगुप्तेन । ( श्रीरमानाथवराट ) ) ।

---

# आयुर्वेदे मनस इन्द्रियत्वे भौतिकत्वे च विमर्शः

[ निबन्धकः—श्रीसतीन्द्रचन्द्रतर्कतीर्थ-न्यायाचार्यः ]

तत्र तावदादौ मन इन्द्रियमनिन्द्रियं वा ? इन्द्रियं चेद् भौतिकमभौतिकं वा ? इति विमर्शे मुख्यतया पञ्चतयी विप्रतिपत्तिः ।

(१) मन इन्द्रियम्; (२) मनो नेन्द्रियम्; (३) मनो भौतिकमिन्द्रियञ्च; (४) मन इन्द्रियं परं न भौतिकम्; (५) मनो नेन्द्रियं नापि भौतिकम् इति । तदायुर्वेदे किंस्वरूपं तदिति तावद् विचार्यते—

चरकादौ प्रायः सर्वत्रैवेन्द्रियविषयकं किमप्यभिलक्ष्य पञ्चत्वविशेषण-श्चेन्द्रिये प्रक्षिप्य चक्षुरादीनामेवेन्द्रियत्वेन ग्रहणं कृतं, न मनसः । तथाहि— "इह खलु पञ्चेन्द्रियाणि, पञ्चेन्द्रियद्रव्याणि, पञ्चेन्द्रियाधिष्ठानानि, पञ्चेन्द्रियार्थाः, पञ्चेन्द्रियबुद्धयो भवन्ति इत्युक्तमिन्द्रियाधिकारे" । (च. सू. ८।३)

तत्र—"चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि। पञ्चेन्द्रिय-द्रव्याणि—खं वायुर्ज्योतिरापो भूरिति। पञ्चेन्द्रियाधिष्ठानानि—अक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति। पञ्चेन्द्रियार्थाः—शब्द-स्पर्श-रूप-रस-गन्धाः। पञ्चेन्द्रियबुद्धयः—चक्षुर्बुद्ध्यादिकाः, ताः पुनरिन्द्रियार्थसन्निकर्षजाः क्षणिका निश्चयात्मिकाश्च इत्येतत् पञ्चपञ्चकम्।" ( च. पू. ८।८ १२ )

"य पञ्चानामिन्द्रियार्थानामन्यतमं"......( च. सू. २६।८ )। "बुद्धीन्द्रियाणि पञ्चेव", ( च. शा. १।६४ )। "पञ्चेन्द्रियाधिष्ठानानि" ( च. शा. ७।७ )। "अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः"—( सु. शा. ४।३ ) "अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः"—( सु. सू. ३०।१ )। "पञ्चेन्द्रियं पञ्चसु भावयन्ति...... पञ्चेन्द्रियं पञ्चसु भावयित्वा"...( सु. शा. ६।१ ) इत्यादि।

न च क्वापीन्द्रियत्वेन मनोऽपि विशेषितं स्वतन्त्रे, केवलं प्रतितन्त्रमनुसृत्य "षडिन्द्रियप्रसादन" इति वाक्यं विहाय। यदि च मनोऽपीन्द्रियत्वेनाभिमतं स्यात् तर्हीन्द्रियत्वेन यथा चक्षुरादिकमेव बहुकृत्वः समुपात्तं, मनस्तु कथं न तथा सनाथीकृतम्? न च कृतमेव तत् तथेति वक्तुं शक्यम्, इन्द्रियसामान्यप्रसङ्गे सर्वत्र पञ्चत्वविशेषणोपादानात् पञ्चत्वाविशेषितेनापीन्द्रियपदेन चक्षुरादीनामेव सर्वत्र ग्रहणात्, इन्द्रियाणां मनसश्च बहुत्रैकत्र पृथक् पृथगुल्लेखात्, मूलकृतापि स्वतन्त्रस्वारस्येन कुत्रापीन्द्रियत्वेन मनसोऽग्रहणाच्च।

मनश्चेदिन्द्रियं तर्हि पुनः पुनरपि सहेन्द्रियेण तत्प्रसङ्गे सर्वत्रैकत्र पृथगुल्लेखे किं रहस्यं? यदि च मनोऽधिष्ठितं सदेव नियतविषयमिन्द्रिय-पञ्चकमुपादत्ते स्वं स्वं विषयमिति ( मनसः ) प्राधान्यात् मनसश्च सामान्यविषयत्वात्, अन्तर्बहिर्भेदेन च मिथो भेदाद्वा पृथगुपादानमेकत्रापि नासङ्गतं, शिष्य-वात्सल्येन तत्सौकर्यार्थं वा तथात्वे न तद्दोषावहमितीन्द्रियत्वं मनसोऽपीति मन्वानानामेतद् रुचिकरमपि चिरचारुविचारकचरकारुचिकरमेव तच्चरकरहस्य-विदो मन्यन्ते, चरकेण स्वयं पञ्चेन्द्रियाणीति प्रतिज्ञाय प्रतिपादितत्वात्।

तथाहि विमाने सिद्धान्तपदार्थप्रपञ्चावसरे—"प्रतितन्त्रसिद्धान्तो नाम

तस्मिंस्तस्मिन्नेकैकस्मिंस्तन्त्र तत्तत्प्रसिद्धं, यथा अन्यत्राष्टौ रसाः षडत्र, पञ्चेन्द्रियाण्यत्र षडिन्द्रियाण्यन्यत्र तन्त्रे"—( च. वि. ८।३७ ) इत्यादिना स्वतन्त्रे स्पष्टतया पञ्चेन्द्रियाणि समर्थितानि, न च सह मनसा षडिन्द्रियाणीति मनसो नेन्द्रियत्वमिति स्फुटमेवावगम्यते। अत एव च मनस इन्द्रियाणाञ्चैकत्र पृथगुल्लेखोऽपि संगच्छत इति मनसोऽनिन्द्रियत्वपक्षपातिनः।

ननु च "षडिन्द्रियप्रसादनः" ( च. सू. २६।४२ (क)—×—सु. सू. ४२।६ ) इत्यत्र षट्त्वविशेषणस्येन्द्रियेषु सह मनसैव प्रतिपादनान्मनसोऽपीन्द्रियत्वमभिहितमिति चेत्? न सर्वपारिषदत्वादायुर्वेदस्य परमतममतमपि स्वतन्त्रे प्रतितन्त्रसिद्धान्तानुसारेण परप्रसादनायैव वा प्रसादप्रस्तावे षडिन्द्रियेत्यादिना कथञ्चिदुपचरितमनुमतमिव प्रदर्शितम्।

अत एव "कालबुद्धीन्द्रियार्थानाम्" ( च. सू. १।५५ ) इत्यत्र "स्वशास्त्रे मनस इन्द्रियाभिधानाभावात् परतन्त्रसिद्धेन्द्रियानुमतत्वेऽपि स्वतन्त्रे व्यवहारार्थम्" इत्यादि गङ्गाधरव्याख्यानमपि तदेव समर्थयति। अन्यथा षडिन्द्रियेत्यत्रे न्द्रियपदेनैव मनसोऽपि लाभात् षडित्यस्य वैयर्थ्यापत्तिः। "प्रीणनं जीवनं लेपः" ( अ. हृ. सू. ११।८ ) इत्यत्रारुणदत्तेन—"रसो हि सम्यगभ्यवहरणात: स्रोतांसि प्रविश्य इन्द्रियप्रसादमभिनिर्वर्त्तयन् मनसः प्रीतिमादधाति" इति यदुक्तं तदपि परम्परया मनसः प्रसादजनकत्वेन प्रसादप्रसङ्गे मनोऽप्यपरिहाय चरकादौ षडिन्द्रियेत्यत्र षट्त्वविशेषणं सरहस्यमिति द्योतयति।

यत्तु टीकाकृद्भिः क्वचिदिन्द्रियत्वेन मनोऽप्युल्लिखितं तदपि सर्व्वपारिषदत्वादायुर्वेदस्य प्रतितन्त्रमनुसृत्यैव न स्वतन्त्रं, कथञ्चिदुपचाराद्वा। अन्यथा तेषां क्वचिदिन्द्रियत्वं क्वचिच्च नेन्द्रियत्वम् इति वदतां मिथः स्ववचोव्याघातः "पञ्चेन्द्रियाण्यत्रे"ति मूलविरोधश्च स्यात्।

प्रतितन्त्रसिद्धान्तानुसरणमपि तत्प्रदर्शनेन स्वतन्त्रे वस्तुतत्त्वप्रतिपत्तौ क्वचिद् भवत्येवोपयोगि। आयुर्व्वेदानुकूल्येन हि पदार्थतत्त्वं प्रतिपादयता स्वातन्त्र्येण च क्वचन स्वमतं च प्रकटयता भगवता चरकेण ( सुश्रुतेन च ) नैकान्ततः कस्यापि दर्शनान्तरस्य मतं सर्वांशेन परिगृहीतम्। प्रत्युत न्याय-

वैशेषिकसांख्यादिमतमांशिकं क्वचित् तुल्यतया विभ्रगवताऽपि हेयं हित्वा चोपादेयमुपादाय चायुर्वेददर्शनमिति प्रवादोऽपि निरपवाद एव प्रत्यपादि ।* तथा चात्र परप्रति)तन्त्रानुसारं स्वतन्त्रे क्वचिदन्यथापि वदंस्तन्त्रकारो निरनुयोज्य एव । अन्यथा "पञ्चेन्द्रियाण्यत्र तन्त्रे" इति प्रतिज्ञाय पुनरन्यप्रसङ्गे "षडिन्द्रियप्रसादनः" इति मिथो विरुद्धं वदतश्चरकस्य स्ववचो व्याहन्येत । वदतो व्याघातश्चायं सुमहान् दोष इति सर्व्वानुमतम् । तदेवं प्रतितन्त्रसिद्धान्तं सिद्धान्तयतश्चरकस्य रहस्यवैशेष्यान्मनसो नेन्द्रियत्वे स्वारस्यमिति चरकपक्षसंरक्षणदक्षाः साधु समीक्षन्ते ।

अथ तथापि "इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा शंसितानि यैरेव ससृजे घोरं तैरेव शान्तिरस्तु नः" ( अथर्व्व १६।६।५ ) इत्यायुर्वेदाकरविरोध इति चेत्? न, नहि सजातीयेनैव संख्यापूरणमिति नियमः, विजातीयेनापि तद्दर्शनात् । तथा हि "वेदानध्यापयामास महाभारतपञ्चमान्"—इत्यत्र वेदेन महाभारतेन वेदगतपञ्चत्वसंख्यापूरणमिव, "यजमानपञ्चमा इडां भक्षयन्ति" इत्यत्र यजमानेनानृत्विजाऽपि ऋत्विग्गतपञ्चत्वसंख्यापूरणमिव च मनसा । अनिन्द्रियेणापि इन्द्रियगतषट्त्वसंख्यापूरणमत्र सुतरामविरुद्धम् । "मनःषष्ठानीन्द्रियाणि" इत्यादिगीतावचनेऽपीदृश्येव गतिः ।

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" ( का० १।३।१० ) इत्यादिश्रुतिततिभिः "मनः सर्व्वेन्द्रियाणि च" ( मुण्डक-२ ) इत्याद्यनेकश्रुतौ, "कृतार्थ इव संहृष्टः प्रहृष्टेन्द्रियमानसः" ( वा० रा० किष्कि० ४४।४७ ) इत्यादि वाल्मोकिरामायणे, "अह्ना यदेनः क्रियते इन्द्रियैर्मनसापि वा ( आदि०

---

* अन्यशास्त्रोपपन्नानां चाचार्य्याणामिहोपनीतानामर्थानामर्थवशात् तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यं कस्मात्? नह्येकस्मिन् शास्त्रे शक्यः प्रायशः सर्वशास्त्राणामवरोधः कर्त्तुम् । भवन्ति चात्र—

एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ।
तस्माद् बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥ ( सु. सू. ४।६-७ )

६२।३ ) इत्यादि महाभारते च मनस इन्द्रियेभ्यः पृथक्पाठाच्च मनो नेन्द्रियं परमिन्द्रियसहकारितया नियन्तृ न चेन्द्रियाणां तत्तुल्यमितीव प्रतिभाति ।

अत्र च सिद्धान्ते "इन्द्रियाणां मनश्चास्मि" इति गीतावचने सम्बन्धे षष्ठीमङ्गीकुर्व्वतां ( इन्द्रियानुग्राहकत्तया ) वेदान्तपरिभाषाकृतां महावेदान्तिधर्म्मराजाध्वरीन्द्राणां शाङ्कर 'पञ्चीकरणस्य' वार्त्तिकाभरणकृतां नारायणेन्द्रसरस्वतीपादानाञ्च मतमित्थमेकमेवेति वेदान्तमतानुसन्धाने वेदान्तिनामपि मतभेदो दृश्यते ।*

अतीव प्राचीनतममिदं मनस इन्द्रियत्वं विवादग्रस्तमिति। "षष्ठस्य चेन्द्रियस्य

---

* (१) अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात् । नहीन्द्रियगतसंख्यापूरणमिन्द्रियेणैवेति नियमः—"यजमानपञ्चमा इडां भक्षयन्ति"··· "वेदानध्यापयामास महाभारतपञ्चमान्"···इन्द्रियेभ्यः परा ह्यर्थाः इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावगमाच्च ( वेदान्तपरिभाषा० प्रत्यक्ष० परि० )

(२) "मनो नेन्द्रियमित्यन्यदेव" इति शङ्कर—पञ्चीकरणे गङ्गाधरकविपादाः ।

(३) न चैवमपि मनः करणं तत्रास्तीति वाच्यं ? तस्येन्द्रियत्वाभावात् । "मनः सर्व्वेन्द्रियाणि च" इत्यादिश्रुतौ इन्द्रियेभ्यः पृथग् ग्रहणात् । अत एव श्रुतेः इन्द्रियत्वाभावनिश्चयात्, "मनःषष्ठानीन्द्रियाणि" इत्यत्र विजातीयेनैव संख्यापूरणं...यजमानपञ्चमा इत्यत्र... विजातीयेन···दर्शनात । ( पञ्चीकरणे नारायणेन्द्रपादाः )

(४) "त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" ( ब्र· सू· २।४।१७ )। ते प्रकृताः प्राणाः श्रेष्ठं वर्ज्जयित्वा अवशिष्टाः एकादशेन्द्रियाणीत्युच्यन्ते। श्रुतावेवं व्यपदेशदर्शनात्...स्मृतौ त्वेकादशेन्द्रियाणि इति मनोऽपि इन्द्रियत्वेन श्रोत्रादिवत् संगृह्यते । ( इन्द्रियाधिकरणे भाष्यम् ) अत्र स्मृतिबलादिन्द्रियत्वं स्वीकृतम् ।

द्रव्यग्राहकस्याभावात्" इति रसवैशेषिकसूत्रस्य भाष्यकारोऽप्याह—मनसश्चेन्द्रियत्वं विवादस्थानमिति।

अस्तु वा गीतादौ सांख्यादिदर्शनसम्मतमिन्द्रियमुपादाय बहुवादिसम्मततया च "मनःषष्ठानीन्द्रियाणि" इत्यस्य "इन्द्रियाणां मनश्चास्मि" इत्यस्य चैकवाक्यतया समाधानान्तरं, तथापि प्रागालोचितचरकप्रतीकविवेकात् चरके मनसो नेन्द्रियत्वे स्वारस्यमिति चरकानुयायिनामनुरणैव स्वपक्षरक्षा।

चरके "अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्यामः" ( च० इ० ४।१ ) इत्युपक्रम्याध्यायोपसंहारपर्य्यन्तं पञ्चेन्द्रियीयमरिष्टं प्रदर्शितं न मानसम्। यतश्चेन्द्रिय-(अनीक) समूहोक्तावपि तदन्तर्गतत्वेन मनो न गृहीतं, ततोऽप्यायुर्वेदे मनो नेन्द्रियमित्येव प्रतिपदं प्रतिभाति।

किञ्च,—इन्द्रियस्थाने प्रथमाध्यायप्रारम्भे—"इन्द्रियगतमरिष्टमभिधाय सत्त्वादीनामग्रे सूचितानामरिष्टानामग्रे वक्तुं युज्यते...सत्त्वादीनामग्रेऽभिधानमिन्द्रियैः समं बुद्धिसाधनत्वादिप्रसङ्गागतं ज्ञेयम्" इति चक्राशयोऽपि मनो नेन्द्रियमिति द्योतयति।

ये तु,—"तत्रेन्द्रियाणां समनस्कानां" (च० सू० ८।१०) इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते"—( च० शा० १।२२ ) इत्यादिपाठपरिपाट्या मनसोऽपीन्द्रियसाहचर्य्यादिन्द्रियत्वमनुमन्यन्ते तेषां मते साहचर्य्यमात्रेण "समनस्क आत्मा" इत्याद्युक्तितो मनसि आत्मत्वमप्यापद्येत। ततश्च साहचर्य्यं न तेषां मनोरथं पूरयितुमीष्टे। प्रत्युत पृथक्पाठादनिन्द्रियत्वमेव सुदृढं साधयतीति प्रागप्युक्तम्।

नन्वेवमपि चक्रादिटीकाविरोधो दुष्प्रतिरोध एव प्रसज्येत यदि स्यान्मनसोऽनिन्द्रियत्वमभिमतं चरकतन्त्रे। यथाह चक्रः—"इह खलु पञ्चेन्द्रियाणि" इति सूत्रे ( च० सू० ८।३ ) इहेति इह प्रकरणे पञ्चेन्द्रियाणि, तेन प्रकरणान्तरे दर्शनान्तरपरिग्रहेण वक्ष्यमाणैकादशेन्द्रियाभिधानेन समं न विरोधः। यतः सर्व्वपारिषदमिदं शास्त्रं, तेनायुर्वेदाविरुद्धवैशेषिकसांख्यादिदर्शनविरुद्धार्थोऽभिधीयमानो न पूर्व्वापरविरोधमावहतीत्यर्थः। मनस्तु यद्यपि वैशेषिक-

मतेऽपीन्द्रियं शास्त्रकारेणापि मधुररसप्रस्तावे "षडिन्द्रियप्रसादन" इत्यभिधानादनुमतमेव, तथापीह प्रकरणे चक्षुरादिभ्यो वक्ष्यमाणाधिकधर्म्मयोगितया नेन्द्रियत्वेन पठितम् ( नेन्द्रियमितीन्द्रियत्वेन न पठितम् ) इत्येतावदेवोक्तमिन्द्रियाधिकारे पूर्व्वाचार्य्यैरिति शेषः। एतेन स्वशास्त्रेऽपीन्द्रियाधिकारे एतावदेवोक्तमिति फलति ( च० सू० ८।३ चक्रटीका )। तथा च निरुक्तचक्रव्याख्यानेन मनसोऽपीन्द्रियत्वमिति प्राप्ते "वैद्यकदर्शने पाञ्चभौतिकत्वादिन्द्रियस्य ( च० सू० ३।८३ चक्रटीका ) "इन्द्रियाण्यपि हि पाञ्चभौतिकान्यस्मद्दर्शने" ( च० चि० १५।१२ चक्रटीका ) "भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः" ( सु०शा० १।४ ) इत्यादिवैस्तु प्रतीकैर्मनसो भौतिकत्वमपि प्राप्तमिति मनसो भौतिकत्वमिन्द्रियत्वञ्चानङ्गीकुर्व्वतां सिद्धान्तो न युक्तिसहः, गङ्गाधरमतप्रतिकूलश्च, "अतीन्द्रियं पुनर्मनः" ( च० सू० ८।४ ) इत्यस्य अतिशयेनेन्द्रियमतीन्द्रियमिति तद्व्याख्यानादिति चेत् ?

अत्र प्राहुः—"षडिन्द्रियप्रसादनः" इतिप्रतीकेन "परमतमप्रतिषिद्धमनुमत"मिति न्यायो नात्रोपयुज्यते यतश्च चरकेण 'पञ्चेन्द्रियाण्यत्र' इत्यादिना वस्तुतः षडिन्द्रियपक्षं तन्त्रान्तरीयम् इति सूचयता स्वसिद्धान्ते मनस इन्द्रियत्वं ( प्रतिषिध्य ) नानुमतमित्येव प्रतिपादितमिति स्पष्टतया प्रतीयते। चक्रपाणिरप्याह—"तेन प्रकरणान्तरे दर्शनान्तरपरिग्रहेण" इत्यादि, एतेन प्रतितन्त्रसिद्धान्तानुसारेणैव परिग्रह इति स्फुटमपहाय इह प्रकरणे इति व्याख्यानं चक्रेणापाततः कृतमिति सङ्गमनीयम्, अन्यथा प्रकरणान्तरेऽपि शारीरादौ "बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्म्मेन्द्रियाणि च" ( च० शां० १।६४ ) ( अत्र 'एव'-कारेण मनसः पृथक्पाठेन च षडिन्द्रियाधिष्ठानानि"..."पञ्च बुद्धीन्द्रियाणि" ( च० शा० ७।७ ) इत्याद्युल्लेखात् चक्रपाणेर्वस्तुगत्या तादृशावगतिस्त्वगतिरेव स्यात्।

विशेषतश्च चक्रपाणेरपि पूर्व्वापरवचननिचयविचयनेन परमतसिद्धमेव मनस इन्द्रियत्वमिति सर्व्वपारिषदत्वादायुर्वेदस्य इत्याद्यभिधानेन चेन्द्रियप्रस्तावे मतान्तरसिद्धमिन्द्रियमपि प्रसङ्गात् कियत्समालोचनार्थमेवा"तीन्द्रियं पुनर्मन

इत्याद्यभिहितमिति प्रतिभाति। कथंकारं मन इन्द्रियाणामर्थग्रहणे सामर्थ्यं नूनमनुकूलयति विना च मनसा नेन्द्रियाण्यर्थग्रहणसमर्थानि भवन्तीत्यादि स्फुटीकर्त्तुमेवात्र मनःप्रसङ्गः सुसङ्गत इति वा वक्तुं युज्यते। किञ्च मनसोऽपीन्द्रियत्वं मन्यमानानामानुकूल्येन विविधमतमात्रमत्रोल्लिखितमिति वाऽभिप्रायः। अतिशयेनेन्द्रियमतीन्द्रियमिति गङ्गाधरव्याख्यानमप्येतत्-तात्पर्यकमेव। प्रतितन्त्रसिद्धान्तमनुसृत्य वा।

अन्यथा—मनस इन्द्रियत्वं ( वैद्यकतन्त्रे चेन्द्रियत्वाद भौतिकत्वगित्यवगमे मनसो निरवयवत्वप्रतिपादनादिकं—"बुद्धिर्मनश्च निर्णीते यथैवात्मा तथैव ते" ( च० सू० ११।११ ) इत्यत्र अतीन्द्रियमिति हेतुगर्भविशेषणं, अतीन्द्रियं—सूक्ष्मं निरवयवमिति यावदिति" शिवदासव्याख्यानस्य,—गङ्गाधरस्यापि "खादयश्चेतना षष्ठाः" ( च० शा० १।१६ ) इत्यत्र, "उभयमेवेदं मन एकमणु च ज्ञानायोगपद्यलिङ्गमभौतिकञ्च" तथा "कालबुद्धीन्द्रियार्थानाम्" इत्यत्र च—"स्वशास्त्र मनस इन्द्रियाभिधानाभावात्" इत्यादिप्रतीकस्यापि महद-सामञ्जस्यं प्रसज्येत।

"तस्मादतीन्द्रियं पुनर्मनः"—इत्यस्य चरकस्वारस्यरहस्यानुस्यूतं चरकानुमतं तु व्याख्यानं युक्तियुक्तमित्थं प्रतिभाति यथा,—ननु चान्यत्र तन्त्रे मनसोऽपीन्द्रियत्वं प्रतिपाद्यते तदत्र तदनपेक्ष्य पञ्चेन्द्रियाणीति कथमुच्यते? इत्याशङ्कां परिजिहीर्षुराह—"अतीन्द्रियं पुनर्मनः" इत्यादि। अयमाशयः—अत्र पुनरिति इन्द्रियेभ्यो भेदप्रतिपादनार्थम्; "पुनरप्रथमे भेदे" इति कोषात्। अतीन्द्रियमिति च भावप्रधानो निर्देशः, इन्द्रियत्वमतिक्रान्तमित्यर्थः। अतो नेन्द्रियसंज्ञकं मनः, किन्तु 'सत्त्व'संज्ञकम्। समुद्रिक्तसत्त्वं हि मनः प्रसन्न ( स्वस्थ ) मित्यभिधीयते, तत एव सात्त्विकोपादानसत्त्वगुणबाहुल्याच्च विशेषतः सत्त्वेति नाम्ना ख्यातं न त्विन्द्रियत्वेनापीति वस्तुगत्या तस्मात्र तन्त्रे स्वारस्येनेन्द्रियत्वात्। चेतस्त्वेनाऽपि ख्यातं मनो नेन्द्रियत्वेन, इत्येकीयमतमपि तुल्यतया स्वमतसमर्थकं दर्शयति—"चेत इत्याहुरेके" इत्यन्तेन। एतत्प्रदर्शनञ्च स्वतन्त्रे चेतःशब्दस्य भूरिप्रयोगात् स्वयमपि तन्मतमनुमतमिति ज्ञापनाय।

विशेषतश्चेदमप्यवधातव्यम्—चक्षुरादीन्यपि ह्यतीन्द्रियाणि "तत्रानुमान-गम्याना"—मित्यादिना ( चरक० सूत्रस्थान ८।१४ ) स्वयमनुमानगम्यत्वाभिधानात् ( अत्र पञ्चेन्द्रियाणामेव भौतिकत्वमुक्तं न मनसः ) "यैरेव तावदिन्द्रियैः प्रत्यक्षमुपलभ्यते तान्येव सन्ति चाप्रत्यक्षाणि" च० सू० ११।७ ) इत्यादिना चेन्द्रियाणां तथैवातीन्द्रियत्वस्य प्रतिपादनाच्च "अतीन्द्रियं पुनर्मनः" इत्यनेनात्र मनस्येव केवलमापाततो यथाश्रुतार्थमुपादायातीन्द्रियत्वकथनादिकन्तु नात्युपयोगीति भावप्रधानेन्द्रियपदेन अतिक्रमणार्थेन चातिना सह योगादिन्द्रियत्वमतिक्रान्तमित्यर्थग्रहणं नायुक्तम्। अतिशयेनेन्द्रियत्वकथनादिकन्तु परतन्त्रमनुसृत्योपचाराद्वा ( इन्द्रियाणां नियन्तृतया ) कथञ्चित् संगमनीयम्। अन्यथा गङ्गाधरस्य "स्वशास्त्रे मनस इन्द्रियाभिधानाभावात्" इत्यादिकं "कालबुद्धीन्द्रियार्थाना"—मित्यत्रोक्तं स्ववचोव्याघातादसंगतं स्यादित्युक्तप्रायम्।

तथापि मनसोऽपीन्द्रियत्वं चरकाभिमतमिति यदि केनचिदुच्येत तर्हि पञ्चेन्द्रियाण्यत्रेति चरकप्रतिज्ञा विज्ञैरपि दुर्ज्ञेया स्यात्। षडिन्द्रियाणीति विहाय "इह खलु पञ्चेन्द्रियाणी"त्येवमुक्तेः किंनाम तात्पर्यान्तरं भवेत् बहुलाभो वा ? प्रत्युत तथात्वे 'षडिन्द्रियप्रसादनः"—इत्युपादाय विमर्शोऽप्यग्रे नोत्थातुं शक्यत एव। एवं च मनसोऽनिन्द्रियत्वेऽपि "मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति" ( च. सू. ८।७ ) इत्याद्युक्त्या च मनोऽधिष्ठानमन्तरेण चेन्द्रियाणामकार्म्मुकत्वमेवेति इन्द्रियप्रसङ्गे मनसोऽपि प्रसङ्गः सुसङ्गत एवेत्यादिकमपि बहुतरमूहनीयम्।

चक्रस्तु—"चक्षुरादिभ्यो विशिष्टेन धर्म्मेण मनो दर्शयत्यतीन्द्रियमित्यादि। अतिक्रान्तमिन्द्रियं चक्षुरादीनां यदिन्द्रियत्वं वाह्यज्ञानकरणत्वं तदतिक्रान्तम्; ( एतेनेन्द्रियमिति भावप्रधाननिर्देश इति चक्रोऽप्याह ) इत्यर्थः। यद्यपि मनोऽपि सुखादिज्ञानं प्रति करणत्वेनेन्द्रियं तथापि चक्षुराद्यधिष्ठायकत्वविशेषादतीन्द्रियमित्युक्तम्। यदि वा चक्षुरादिभ्योऽप्यतीन्द्रियेभ्यः सूक्ष्मतरं दुरवबोधात् इत्यादि व्याचचक्षे ( च० सू० ८।४ ) चक्रपाणिटी० )। ज्ञानकारणत्वेनेन्द्रियत्वसाधने बुद्ध्यहङ्कारादीनामपि इन्द्रियत्वापत्तिरिति यदि वेति कल्पान्तरम्।

मनश्चाभौतिकमाहङ्कारिकमिति गङ्गाधरः, तथाच—"सत्त्वमित्येवा संज्ञा सत्त्वप्राधान्यात्......स्वरूपलक्षणार्थं सत्त्वसंज्ञकं"......( च०सू० ८अ: )। "मनश्चाहङ्कारिकं......त्रिविधं सात्त्विकं राजसं तामसञ्चेति......मनस्तु......न भौतिकं न कालिकं न चात्ममयं न दिङ्मयमित्यतः पृथगुक्तम्। एतद् विद्वांसो मनो भौतिकमाहुः "( जल्पकल्पतरु० पृः ९९-१०१ )

चरकोक्तात्मजत्वमनोजत्वादेरहस्यं तु—मृत्युकाले हि संस्कारवशान्मनसा यादृशा वृत्तिरात्मनो विलक्षणानुभवबलादुत्पद्यते तदनुकूलमेवादृष्टाधीनमग्रिम-जन्नापि भवतीति तात्कालिकीं मनोवृत्तिमनुसृत्य सत्वे ह्यात्मजत्वं व्यपदिश्यते मनसा जीवाधीनपरिणामभेदात्। तात्कालिकं च किल मनः प्रबल-तत्तद्भावप्रभावितं यादृशीं दशामनुप्रपद्यते तादृशमेवाग्रिमे जन्मन्युत्कटसंस्कार-पराधीनं भवद् भवतीति मनस्यात्मजत्वं, "मनसो मनस्तः" इत्यादिना मनोजत्वं च नूनमुपचारविशेषादेव समुपपद्यते।

चरकोऽप्येवमाह—"येनास्य खलु मनो भूयिष्ठं तेन द्वितीयायामाजातौ संप्रयोगो भवति, ( चरक० शा० ३।१३ )। "भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमस्तत्र च कर्म हेतुः"—( च० शा० २।३७ ) इत्यादि। अन्यथा एकस्मिन्नेव तस्मिन् मनोजत्वमात्मजत्वञ्च दुरुपपादं प्रसज्येत। इत्थञ्च—तादृशमौपचारिकमेव वस्तुगत्या यथाकम्मं मनोजत्वमात्मजत्वञ्च मनसि इति मनसि निधाय परिणामिनित्यत्ववादिमतं न्यायवैशेषिकादिमतञ्च कथञ्चिदैकमत्येन विभाव्यैव चकोऽपि तत्र तत्र ( च० सू० १।१०७, च० वि० ५।३ ) "नित्यस्येह मनसः", "मनस्तु नित्यत्वेन" इत्येवमुल्लिख्य निरवयवस्याणुपरिमाणस्य च मनसो नित्यत्वं व्याचचक्षे। "अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चादृष्टकारितानि" ( वैशेषिक० सू० ५।२।१७ ) इति सूत्र-मपीममेवाशयं समर्थयति।

अत एव भौतिकमपि वस्तुजातं यदभौतिकमपि मनः सुखयति तत्तादृश-भौतिकस्य समुद्रिक्तसत्वतया सत्वांशतः प्रभावप्रभावितत्वादेव वेति सिद्धान्तानु-सारी पन्थाः। ( व्यक्तीभविष्यति चैतदग्रे )।

चक्रपाणिरप्यन्यत्राह—"निर्विकारः परस्त्वात्मा" इत्यत्र ( च० शा० ४।३३ चक्रटीकायां ) यानि चात्मजत्वेन गर्भे "तासु तासु योनिषूत्पत्तिः" ( च० शा० ३।१० ) इत्यादिना ग्रन्थेन दर्शितानि तान्यपि परमात्मविकारा न भवन्ति, किन्तु सत्त्वरजःप्रवर्तताप्रत्वविकारजमनोविकारजन्यधर्म्माधर्म्मजन्यान्येव। तेन सूक्ष्मचिन्तायां आत्मजानि यान्युक्तानि तान्यपि सत्त्वजान्येव। ततश्चेहात्मजावयवविकारोऽपि सत्त्वजावयवविकार एव बोद्धव्य इति भावः"—( च० शा० ४।३३ )।

"मनसो मनस्तः" इति पूर्व्वजन्मव्यवहिते यादृङ्मन इह जन्मन्यपि तादृशमेव मनो भवति, उक्तञ्चान्यत्र—"जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तदेवाभ्यस्यते पुनः"॥ इति, ( च० शा० ३।३६ चक्रटीका )।

अष्टाङ्गसंग्रहेऽपि—"नानायोनिषूत्पत्तिः मनः चेतनेन्द्रियाणि ( आत्मजानि ) ( शा० ५.२० )। अत्र शशिलेखायां—"तथा मन आत्मजं तद्धि न कुतश्चिदागच्छति आत्मना नित्यसम्बन्धित्वात्, इन्द्रियाणि तु आत्मकृतान्येव तानि च पञ्च'—इत्युक्तम्।

"नह्यसत्त्वः कदाचिदात्मा" ( च० शा० ३।१८ ) इति चरकोक्तिरपि जीवस्य सदैव मनसा सम्बन्धात् यथार्थतो मनो नात्मजमिति द्योतयति। तदेवमात्मकृतसुकृतदुष्कृतजनितमनःपरिणतिविशेषादात्मजत्वं मनसो व्यपदेशमात्रमिति सिद्धम्।

एतेन ये तु मनस्यात्मजत्वं यथाश्रुतार्थमात्रतो बुद्ध्वा जन्यद्रव्यस्य सावयवत्वेन ( आत्मजं ) मनः सावयवं सावयवस्य च द्रव्यस्य पाञ्चभौतिकत्वनियमात् मनोऽपि पाञ्चभौतिकमिति निश्चिन्वन्ति, तेषां केषाञ्चिन्मतमपि निरस्तम्।

किञ्च, आत्मनो द्रव्यं प्रति समवायिकारणत्वमप्रसिद्धम्। असमवायिकारणत्वञ्च द्रव्ये नास्त्येव। ततश्च त्रिविधेषु कारणेषु निमित्तकारणमात्रमवशिष्यते। कया च युक्त्या कीदृङ्निमित्तं भवन्नात्मा कारणत्वेन व्यपदिश्यते इति विचारणीयम्—सवासनादृष्टाधिष्ठानत्वेन कर्म्मानुरूपमेवाग्रिमं व्यवहारिकं

जन्म लभमानो ह्यात्मा धर्माधर्मादेरपि मूलकारणत्वेन निमित्तमित्यात्मजत्वं तेषु तेषु च भावनानुरूपेषु विशिष्टेषु भोगसाधनेषु विशेषतश्चरकादौ प्रदर्शितम्। अत एव चक्रेणाप्युक्तं, "अत्र च तत्तद्देवादिपश्वादियोनिगमनादौ धर्म्माधर्म्मजन्ये धर्म्माधर्म्मस्यापि जनकत्वेनात्मैव मूलकारणमुच्यते, आत्मज्ञानप्राणापानप्रेरणादौ तु मनः-करण आत्मैवाव्यवधानेन कारणमिति"—( च० शा० ३।१० )। मनसोऽपि तत्त्वमेतेनैव व्याख्यातम्।

गीतायामप्युक्तम्—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" ॥

तथैव सुश्रुतेऽपि—

भाविताः पूर्व्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्त्वभूयिष्ठाः पूर्व्वजातिस्मरा नराः ॥
कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे।
अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान् ॥

( सु० शा० २।५७-५८ )

तदेवं चरकरहस्यमनुसन्धित्सुभिर्युक्तितर्कप्रमाणोपन्यासपुरःसरं प्रतिपादितेऽपि मनसोऽनिन्द्रियत्वे चाभौतिकत्वे निरवयवत्वे चाणुपरिमाणत्वादिके तदेतद्रहस्यमस्वीकुर्व्वन्तस्तत्सिद्धान्तमसहमाना नितान्तमन्तरशान्तिमनुभवन्तो भूयोऽपि विवदन्ते प्रतिद्वन्द्विनः,—अथ शरीरं भौतिकं तदवयवीभूतचक्षुरादीन्द्रियाण्यपि भौतिकानीति क्षमते निर्विवादम्। किन्तु "भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते" ( सु० शा० १।३ ) इति सिद्धान्तात्, चिकित्साऽपि च व्यस्तसमस्तवस्तुभिर्भौतिकैरेव भौतिकानामेव वैद्यकव्यवहारतो दृष्टा श्रुता च, भौतिकानाञ्च परस्परोपकार्य्योपकारकत्वं युक्तितर्कप्रमाणादिबलसिद्धमिति भौतिकेन शब्दादिना मनोदोषप्रशमने सौश्रुती श्रुतिः मनसोऽपीतरेन्द्रियवद् भौतिकत्वं द्योतयतीति मनोऽपि भौतिकमित्यभ्युपेतव्यम्। ( क्रमशः )

# मुक्तधारा

( कविसार्वभौम-रवीन्द्रनाथ-विरचित-'मुक्तधारा'-नाटकस्य संस्कृतानुकल्पनम् )

[ अनुकल्पकः - श्रीध्यानेशनारायणचक्रवर्ती, साहित्यशास्त्री, एम्. ए. ]

## प्रस्तावना

नान्दी—यः काव्य-मणि-माल्य-गीति-कमलैः सम्पूज्य वागीश्वरीम्

लेभे विश्वजनार्घ्यरत्नममलं कीर्तिस्रजा मण्डितः ।

प्राच्यं पश्चिमकं प्रदीप्य किरणै र्योऽभूत् सतां वन्दितः

तं वन्दे कविसार्वभौममनिशं नाथं रवीन्द्राह्वयम् ॥

रवीन्द्रनाथः कविसार्वभौमको

गिरां पतिर्यः कविकुञ्जकोकिलः ।

अपास्तमृत्युः सितकीर्तिमण्डनो

विभातु शश्वद् वसुधा-प्रदीपनः ॥

सूत्रधारः—अहो आनन्दो नु आनन्दः । प्रागेव सर्वकर्मनिपुणां मनोरमां नटीं मे आह्वयामि ।

( मञ्चस्य पार्श्वैकदेशं गत्वा ) आर्ये, यदि नेपथ्यविधानम् अवसितमितस्तावदागम्यताम् ।

नटी—( प्रविश्य ) आर्य, किमर्थमाहूतास्मि ? कः सन्देशः ?

सूत्रधारः—प्रिये, अद्य खलु तावत् कविसार्वभौमस्य रवीन्द्रनाथस्य जन्मशतवार्षिकीमुपलक्ष्य तेनैव महाकविना विरचितस्य मुक्तधारेति प्रख्यात-नाटकस्य संस्कृतानुकल्पनमस्माभिः कलिकातासंस्कृतसाहित्य-परिषत्-सदस्यैरभिनीयते ।

नटी—आर्य, कथं संस्कृतानुकल्पनं, केन वानूदितं तत् ?

सूत्रधारः—कविसार्वभौमेण तस्य जीवनसाधनायां काव्यसाधनायाञ्च या खलु शाश्वती भारतीया संस्कृतिर्वन्दिता नन्दिता प्रचारिता च, सा तु संस्कृत-

भाषाश्रिता। परन्तु, इयं सुरवाणी सामग्रिकभारतीयसंस्कृतेश्चिरन्तनी धात्री। निखिलभारतस्य सर्वेषां प्रदेशानां बन्धनरज्जुरियं सुरभारती विश्वभाषारूपेणापि स्वीकृता।

नटी—बुद्धं मया सर्वमेव। अतः खलु भारतवर्षस्य प्राचीनमनीषिणः श्रीमच्छंकराचार्य-श्रीचैतन्यदेवप्रमुखा अस्माकं पूर्वसूरयः निखिले भारते संस्कृतभाषयैव तेषां भावधारां प्रचारितवन्तः।

सूत्रधारः—नूनमेव। अतो निखिले भारते तथाखिले जगतीतले रवीन्द्रभावधाराप्रचारणेऽपि संस्कृतमेव योग्यतमा भाषा। अतः खलु—

तत्काव्यं मधुनिर्भरोपममिदं विद्वज्जनानन्ददं
चित्वा वै करुणारसैककथिकां भावोच्छ्वला मर्मणः।
चक्रे संस्कृतभाषयानुरचितं नाट्यानुवादं कवेः
श्रीविश्वेश्वरशर्मदीनतनयो ध्यानेशनारायणः॥

[ इति प्रस्तावना ]

[ उत्तरकूटः पार्वत्यप्रदेशः। तत्रैव उत्तरभैरव-मन्दिरं प्रति प्रसारितः पन्थाः। विदूरे गगनमार्गे कस्यचिदभ्रभेदि-लौहयन्त्रस्य शीर्षदेशः सन्दृश्यते। ततश्चापरस्यां दिशि दृश्यते भैरवमन्दिरशिखरस्य त्रिशूलम्। मार्गस्य पार्श्वत आम्रकानने राज्ञो रणजितः शिविरसन्निवेशः। अमावस्यायामद्य भैरवमन्दिरे भविष्यति आरात्रिकम्। राजा पदव्रजेण तत्र गमिष्यति ; पथि शिविरे विश्रामं लभते। तस्य सभायाः यन्त्रराजो विभूतिः बहुवर्षव्यापिन्या प्रचेष्टया लौहयन्त्रेण बन्धनं निर्माय मुक्तधाराख्यां स्रोतस्विनीं रुद्धवान्। अतुलनीयामिमां कीर्तिं पुरस्कर्तुम् उत्तरकूटाधिवासिनः सर्वे उत्सवार्थं भैरवमन्दिरप्रांगणं प्रति प्रचलन्ति। भैरवमन्त्रदीक्षिताः सन्नयासिनः अखिलं दिवसं स्तवगीतिं गायन्तः परिभ्रमन्ति। तेषां कस्यापि करे धूपाधारे प्रज्वलति धूपः, कस्यापि हस्ते शङ्खः ; गानस्य अन्तरान्तरं कस्यापि हस्ते ध्वनति च घण्टा तालपूर्वकम्। ]

( गानम् )

जयतु भैरव ! जयतु शंकर !

जयतु जयतु प्रलयंकर

शंकर शंकर !

जयतु संशयभेदन

जयतु वन्धनछेदन

जयतु संकटसंहर

शंकर शंकर !

[ पूजार्थं नैवेद्यं संगृह्य प्रविशति कश्चिद् वैदेशिकः । उत्तरकूटस्य नागरिकं स पृच्छति । ]

पथिकः—आकाशतटमभि किमिदं निर्मितम् ? दर्शनादस्य भीतिः समुत्पद्यते ।

नागरिकः—नैतज्जानासि ? मन्ये वैदेशिकस्त्वम् । एतत्तु यन्त्रम् ।

पथिकः—यन्त्रमिदं किमर्थं विरचितम् ?

नागरिकः—पञ्चविंशतिवर्षाणि व्याप्य अस्माकं यन्त्रराजेन विभूतिना यन्निर्मितं तदेव समाप्तीकृतम्, तदर्थमेवाद्य उत्सवविशेषः ।

पथिकः—यन्त्रेण किं प्रयोजनम् ?

नागरिकः—मुक्तधाराख्या निर्झरिणी तेनैव निरुद्धा ।

पथिकः—अहो, असुरस्य मुण्डमिव तत् दृश्यते, नास्ति मांसम्, आनतश्चास्य हनुदेशः । युष्माकम् उत्तरकूटस्य शीर्षोपान्ते इत्थं मुखव्यादानं कृत्वा दण्डायमानं तिष्ठति । अहर्निशं तु विलोक्य युस्माकं प्राणपुरुषो विशुष्कं काष्ठमिव संजनिष्यते ।

नागरिकः—अस्माकं प्राणपुरुषः सुदृढ़ एव वतते । तन्नास्ति चिन्ताकारणम् ।

पथिकः—तदेव भवेत् । अपि तु न हि समुचितस्तपनतारकानां पुरतश्चास्य सम्प्रसारः ; एतद्धि समाच्छादनीयम् । न पश्यसि किम् , अहोरात्रम् कृत्स्नम् आकाशमण्डलं रोषयतीति ?

नागरिकः—तद् भद्र ! भैरवस्य आरात्रिकमालोकयितुं किमद्य न गमिष्यसि ?

पथिकः—आरात्रिकदर्शनार्थमेव मया वहिर्गतम् । प्रतिवर्षम् अस्मिन्नेव समये मया आगम्यते । किन्तु, मन्दिराद् ऊर्ध्ववर्तिनि गगनमण्डले ईदृशः प्रतिरोधो न कदापि मया दृष्टः । हठाच्चैं तत् पश्यतो मे रोमहर्षः सञ्जातः । मन्दिरशीर्षं यदनेन उल्लङ्घितं तन्मे स्पर्धैव प्रतिभाति । यातु, नैवेद्यमुपनीय प्रत्यागच्छामि । किन्तु, मनो मे न हि प्रसीदति ।　　　　[ प्रस्थानम् ]

[ काचिन्महिला प्रविशति । शुभ्रमुत्तरीयमेकं तस्य मस्तकं परिवृत्य सर्वाण्यङ्गानि च समावृत्य भूतले लुठति । ]

नारी—सुमन, वत्स सुमन ! ( नागरिकं प्रति ) वत्साः, सुमनो मे नाद्यापि प्रत्यागतः ।

नागरिकः—कासि त्वम् ?

नारी—अहन्तु जनाइ-ग्रामस्य अम्बा । स तु मम नयनालोकः, मम प्राणानां निःश्वासः, मम सुमन !

नागरिकः—भोः, तस्य किं सञ्जातम् ?

अम्बा—कुत्र स नीतः, नाहं जानामि । पूजार्थं मया भैरवमन्दिरं गतम्—प्रत्यावृत्याहं पश्यामि नास्ति सः, कुत्रापि नीत इति ।

नागरिकः—तर्हि मुक्तधारायाः प्रतिरोधरचनार्थं स नीतो भवेत् ।

अम्बा—मया तु श्रुतम्—अनेन पथा स नीतः—अस्मात् गौरीशृङ्गात् पश्चिमतः—तत्र दृष्टिर्मे न संगच्छति परतश्च तस्मात् न हि दृश्यते मार्गान्तरम् ।

नागरिकः—अलं विलापेन । आरात्रिकं द्रष्टुकामा वयं भैरवमन्दिरं प्रचलामः । अद्यास्माकम् आनन्दमयोऽवकाशः त्वमपि तावदागच्छ ।

अम्बा—न हि तात, पुरैकदा भैरवस्य आरात्रिकं द्रष्टुमहं गतवती । किन्तु, तद्दिनादेव पूजार्थं गमने चित्तं मे आशङ्कते । श्रूयतां, त्वामहं कथयामि—अस्माकमर्चनम् देवसकाशं न गच्छति । पथि एव तद् अपह्रियते ।

नागरिकः—केन ?

अम्बा—येन अपहृतो मे वत्सः सुमनस्तेनैव । कोऽसाविति नाधुना मयोपलब्धम् । सुमन, तात सुमन, मम वत्स सुमन ! ( उभयोः प्रस्थानम् )

( क्रमशः )

---

# ग्रन्थासादनम्

**रथरज्जुः**—श्रीविमलकृष्णमतिलालेन रचिता प्रकाशिता च [कविसार्वभौम-रवीन्द्रनाथस्य 'कालेर यात्रा' इति रूपकमवलम्ब्य], मूल्यं रूप्यकमेकम्।

विमलकृष्णबुधेन विनिर्मिता
दृढ़तमा रथरज्जुरियं गुणैः।
वहति दृष्टिपथं गमिता मनो-
रथमसौ बहुरूपकचित्रिता॥

चालकगुणेन रथः सुष्ठु चलतीति प्रसिद्धिः। तद्रथरज्जुर्यदि दृढ़ा सन्नद्धा च स्यात् तर्हि तच्चालितो रथो दर्शकानां प्रीतिमुत्पादयन् लक्ष्यस्थानमुपतिष्ठति। रथरज्जुनाम्नयां नाटिकायां बहवो गुणाः सन्तीति तस्या अप्रतिहतगतिरवश्यम्भाविणी सुललितभाषासम्भारात् मधुरप्रसादगुणयोगात् तत्तत्तालंकार-विशेषसन्निवेशवशाच्च रथरज्जुरियं मनोज्ञतमेति नः प्रतिभाति। किं बहुना दृष्टापीयं न दृष्टिपिपासां निवर्त्तयतीति श्रुताप्यस्या झङ्कारततिः पुनस्तच्छ्रवणाय उत्कण्ठामातनोति, परिशीलिताप्यसौ नालं बुद्धिं जनयतीति प्रकर्षोऽस्याः सर्वतो वरिवर्त्ति। आशंसामो यदेतादृशनाटिकामेकां नाटयित्वा सामाजिक-मनोरङ्गे भूयोभूयः समुल्लासं जनयतु रङ्गप्रसादकोऽयमिति।

श्रीनृत्यगोपालपञ्चतीर्थस्य

---

# वियोगवार्ता

वाचकभागधेयानां नितरां क्लेशकरीयं वार्ताऽस्माभिर्विज्ञाप्यते। मास-चतुष्टयेऽस्मिन् बहवो गीर्वाणवाणीं सेवमानाः पण्डितधुरन्धराः स्वर्लोकं प्रस्थिता इति। एते खलु महामहोपाध्याय-हरिदाससिद्धान्तवागीशः, अनन्तकुमार-न्यायतर्कतीर्थः, हरेन्द्रचन्द्रस्मृतितीर्थः, डक्टर-दक्षिणारञ्जनशास्त्री, डक्टर-विमानचन्द्रभट्टाचार्यः, प्रभातकुमारमुखोपाध्यायः, ईश्वरचन्द्रशास्त्री च। एतेषां जीवनोदन्तसारोऽस्माभिः वारान्तरे प्रकाशयिष्यते। परमकरुणामयो भगवान् एतेषां शाश्वतीं शान्तिं विदधातु, अनन्तमानन्दलोकक्षेमान् नयत्विति प्रार्थयामो वयम्।

---

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2, Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 ( for members). Out of stock.

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Rs. 1·50 ( for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 n.P ·62 n.P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., ·50 n.P

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4·50 n.P ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 n·P ; Re. 1·25 n.P ( for members ).

27. **Manavaka-gauravam**—(Drama) by M M Kalipada Tarkacharya, Rs. 2·50 n.P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya, Rs. 1·50 n.p and 1·25 n.p (for members).

29. **Brahmana-Sarvasva**—(A Pre-Sayana Vedic Commentary) of Halayudha, Ed. Prof. Durgamohan Bhattacharya. Rs. 25/-

---

*Sanskrit Sahitya Parishad Series No. 29*

# BRĀHMANA-SARVASVA

**( A Pre-Sāyaṇa Vedic Commentary )**

*By*

## HALĀYUDHA

EDITED WITH INTRODUCTION, CRITICAL NOTES, INDICES & APPENDICES

*By*

PROF. DURGAMOHAN BHATTACHARYYA

*Price Rs. 25/-*

*Published by :—*

**SANSKRIT SAHITYA PARISHAD**

168/1, RAJA DINENDRA STREET,
CALCUTTA—4.

---

## संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृतसाहित्यपरिषन्नाम तदभिधानायाः परिषदो मासिकी सुखपत्रिकेयमतिगभीरार्था दार्शनिकनिबन्धेषु परमकोमला काव्यचिन्तासु धर्म्योपचारा स्मृतिपुराणेतिहासादिषु सूक्ष्मतत्त्वावेदिका विज्ञानविभवेषु संस्कृतोन्नतिमूलप्रवृत्तिप्रचारपरा पारिपार्श्विकवृत्तेषु यथार्थगुणदोषविचारचतुरा ग्रन्थादिसमालोचनेषु गीर्वाणवाणीप्रणयिनामत्युपादेयतया वरीवर्त्ति ।

निबन्धादिकं समालोचनार्थं ग्रन्थादिकञ्च सम्पादकसविधे अधोलिखितसङ्केतानुसारेण प्रेषणीयम् ।

संस्कृतसाहित्यपरिषत्
१६८/१, राजा दीनेन्द्र ष्ट्रीट
कलिकाता-४

---

Printed by Bishnupada Bhattacharyya M. A. Kāvyatirtha, at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Calcutta—4.

Vol. XLIV.
No. 12
४४श-वर्षस्य
१२श-संख्या




April 1962
१८८३ शकीये
चैत्रे
यावत्



# संस्कृत साहित्य परिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीगोपिकामोहनभट्टाचार्य-न्यायतीर्थः
एम्. ए ; डि. फिल्

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
१६८/१ राजा दीनेन्द्र ष्ट्रीट
कलिकाता—४

वार्षिकमूल्यम्—रूप्यकद्वादशकम्

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushana. Re. 1·25; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 n.P (for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 n.P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 n.P ·62 n.P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 n.P ; ·62 n.P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re, 1·25 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members ).

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

Vol. XLIV. No. 12 | १८८३ शकीये चैत्रे ४४श-वर्षस्य १२श संख्या | April 1962.

## महामहोपाध्याय-गणेशदत्तशास्त्री

( १८६१-१९६१ )

[ निबन्धकः—श्रीगोपिकामोहनभट्टाचार्यन्यायतीर्थः ]

सुविदितमेव सुरभारतीसेवकानां विद्वद्वर्याणां यद् विगते वर्षे महामहोपाध्याय-गणेशदत्तशास्त्रिमहोदयानामाविर्भावशतवार्षिकमनुष्ठितम् । न खल्वविदितं नाम संस्कृतभारतीमाराधयतः कस्यापि एतेषां विद्वद्वर्याणां संस्कृतोन्नतिमूलमारम्भ-जातम् ।

प्रसिद्धोऽयं पुरुषवरः १८६१ खीष्टाब्दे लाहोरप्रदेशे प्रादुरभूत् । शैशवे तत्रत्यसंस्कृतविद्यालये तेन महात्मना वेदान्तादि-विविधशास्त्राण्यधीत्य सम्यगायत्तीकृत्य च संस्कृतपरीक्षादिषु ससम्मानं साफल्यमधिगतम् । पश्चात् लाहोरनगरस्थ Foreman Christian College इति प्रख्यातविद्यायतने महाभागोऽयमध्यपकत्वेन वृतोऽभूत् । तत्र न्यायवेदान्तादीनि शास्त्राणि तेनाध्यापितानि । काले गते स खलु भारतीयदर्शनस्य सर्वप्रस्थानेषु वैदुष्यमलभत । चरमवैदुष्यपुरस्कृतिरूपेण 'महामहोपाध्याय' इति विरुदेन तदानीन्तन-शासनपरिचालकैः समलंकृतोऽभूत् । समये तन्महाविद्यालयादवसर-

मादाय लाहोरस्थ-सनातनधर्ममहाविद्यालये अध्यापकपदमलंचकार। स खलु महोदयः १६२८ खृष्टाब्दे लोकान्तरमभिप्रस्थाय स्मरणीयतामद्याभजत! कलिकातान्तर्गत-प्रेसिडेन्सीमहाविद्यालयस्य डक्टर-प्रभुदत्तशास्त्री अस्यात्मज आसीत्। तस्यैवाग्रहातिरेकेण प्रभुदत्तशास्त्रिणा मायावादमवलम्ब्य विवरणात्मको ग्रन्थो विरचितः।

पण्डितप्रकाण्डस्यास्य या कृतिः प्रख्याता सा तु शब्दशास्त्रविषयिणी। "पद्मचन्द्रकोषो" नाम संस्कृतभाषाकोषस्तेन ग्रथितः। विंशतिसहस्रशब्द-संवलितोऽयं ग्रन्थः १८६८ खृष्टाब्दे प्रकाशितः। तदन्तिमपुष्पिकायामास्ते "इति गणेशदत्तशास्त्रिसंकलितः शब्दार्थगणेशः समाप्तः।" नानाकोष-पठितानां शब्दानामेकत्र संकलनेन, हिन्दीभाषया च संस्कृतशब्दानां प्रकृति-प्रत्ययादिना व्याख्यानेन च संवलितमभिधानमिदं व्युत्पित्सूनामवश्यमपेक्षितम् तस्यातुलनीयपाण्डित्यञ्च प्रख्यापयतीत्यलं प्रपञ्चेन।

---

## स्वर्णतरीः

( कविगुरु-रवीन्द्रनाथकृत-'सोनार तरी' कविताया अनुवादः )

[ अनुवादकः—श्रीइन्द्रमोहनचक्रवर्त्ती ]

गगने गर्जति मेघः, निविड़-वर्षाः।
स्थितोऽहमेकाकी कूले, नास्ति मे आशा।
राशीकृता धान्यभाराः सद्यो हि कृतकर्तनाः,
पूर्णा नदी क्षुरधारा प्रखरस्पर्शा
छिद्यमानेषु धान्येषु आगता वर्षाः॥

एकमेव क्षुद्रं क्षेत्रम्, अहमेकाकी-
समन्ताद् वक्रजलानि कुर्वन्ति क्रीड़ाम्।
परतटे दृष्टोऽङ्कित-स्तरुच्छाया-मसोलिप्तः
कश्चिद् ग्रामो मेघावृतः प्रभातकाले।
अस्मिंस्तटे क्षुद्रं क्षेत्रम्, अहमेकाकी॥
गायन् चालयंश्च तरीं कोऽसावायाति!
मन्ये दर्शनमात्रेण परिचितोऽयम्।
प्लवते वायुपटेन, दृष्टिपातं न कुरुते,
तरङ्गास्तु निरुपाया भज्यन्ते पार्श्वे—
मन्ये दर्शनमात्रेण परिचितोऽयम्॥
अये, कुत्र गच्छसि त्वं कस्मिन् विदेशे?
सकृद् बधान तरणीमागम्य कूले।
गच्छ यत्राभिरुचिस्ते, देहि तस्मै य ईप्सितः,
केवलं भो गृहाण त्वं क्षणस्मितेन
सुवर्णानि मे धान्यानि आगम्य कूले॥
यावदिच्छसि नयस्व तरण्यां तव।
किन्तु शिष्टम्?—न किमपि, सर्वं हि न्यस्तम्।
एतावत्तटिनीकूले स्थितो येन मोहगतः
सर्वं समर्पितं मया श्रेणिशः कृतम्—
सद्य एव गृहाण मां कृत्वा कारुण्यम्॥
नास्ति स्थानम्, नास्ति स्थानम्, क्षुद्रैषा तरी-
र्ममैव स्वर्णधान्यानां भारेणापूर्णा।
श्रावण-गगनं वृत्वा सञ्चरन्ति घनमेघाः,
शून्यतटिनीतीरेऽहं स्थित एकाकी—
नीत्वा मे सर्वस्वं गता सुवर्णतरीः॥

---

# आयुर्वेदे मनस इन्द्रियत्वे भौतिकत्वे च विमर्शः

( निबन्धकः—श्रीसतीन्द्रचन्द्रतर्कतीर्थ-न्यायाचार्यः )

( पूर्वानुवृत्तः )

तथा च—"शरीरपतितानान्तु शारीरवदुपक्रमः। मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः" इत्यादिनागन्तुमनोदोषप्रशमो भौतिकेन कराठत एवोक्तः। अन्यच्चान्यत्र भौतिकं मनस्तोषकरत्वेनाभिहितं यथा—'विशिष्टमिष्टं संस्कारैः पथ्यैरिष्टैः रसादिभिः। मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम्' (सु० सू० ४६।४५) "सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम्। स्वादु संजनयत्यन्नमस्वादु च विपर्ययम्"॥ (सु० सू० ४३।४८१) "शब्दान् रूपान् रसान् गन्धान् स्पर्शांश्च मनसः प्रियान्" (सु० सू० ४६।४८२), एवं चरकेऽपि—"मनसोऽनुगुणा गन्धाः शब्दाः संवाहनानि च" (च० सू० २१।५३) "प्रायशो मधुरं स्निग्धं······मेध्यं बल्यं मनस्करम्"॥ (च० सू० १।१०७) "श्रुतिसुखमृदुमधुरमनोऽनुगानां च गातवादित्राणां श्रवणं... (च० वि० ६।१७) इति च भौतिकसम्बन्धान्मनोऽप्यर्थाद् भौतिकमिति चेत् ?

अत्र वदन्ति—अभौतिकेनादृष्टकालादिना साधनेन भौतिकस्यैव भौतिकेनापि शब्दादिना विलक्षणेनाभौतिकस्यापि प्रसादनादिसम्पादनं परस्परोपकार्य्योपकारकत्वं च फलबलायत्तं दृष्टं श्रुतमनुमितं वा को नाम मतिमानपलपितुमीष्टे। "भूतेभ्यो हि परं यस्मा"दित्यादिकन्तु भौतिकानां चिकित्सामभिप्रेत्य भौतिकोपायानां प्राधान्यप्रतिपादनपरम्। मानसचिकित्सायान्तु ज्ञानविज्ञानादीनां प्राधान्यात् चिकित्सामात्रं प्रति भौतिकानां तथात्वप्रतिपादनासम्भवात्। अत एव तत्र डल्हण-व्याख्याने "भूतेभ्यः परं यदव्यक्तादि तत्र चिन्तापि नास्ति" इत्यपि सुसंगच्छते।

वस्तुतस्तु, इन्द्रियान्तरनिरपेक्षात्ममनःसंयोगात् (परम्परया वा) समुत्पद्यमाना ये गुणाः प्रायशस्ते मनस्युपचर्य्यन्त इति येन केन च वस्तुनात्मनः सुखादिकं तत्सर्व्वं मनसोऽपि प्रायो वैद्यकदर्शनेऽप्यनुमतमिति, सांख्यादिनयेऽप्य-

चेतननिष्ठं तत्तच्चेतनसंसर्गादात्मन्यपीति सत्त्वमुद्रिक्तं सुखयति, समुद्रिक्तं च रजो दुःखयत्युद्वेजयति, तमोऽप्युद्रिक्तं मोहयतीति । अचेतनं वस्तुमात्रं त्रिगुणात्मकमिति तत्तद्‌गुणस्वभावादेवं भवतीति सिद्धान्तः ।

दुखं नाम प्रतिकूलवेदनीयं ; अनुकूलवेदनीयञ्च सुखं, तच्च तच्च शरीरावच्छिन्नात्मनिष्ठं मनःसहकारेणानुभूतं कर्म्मानुसारं हि कर्म्मपुरुषं कारणैकूटसमवधानात् सरोगं दुःखितया, नीरोगञ्च सुखितया विदधल्लोकप्रसिद्धिमावहदावहत्कालं सकललोकसिद्धान्तसिद्धमिति न कस्यापि सुविदुषस्तिरोहितम् ।

इत्थञ्च यथास्थानं विन्यस्तं प्रशस्तञ्च समस्तं वस्तु त्रिगुणात्मकतया वस्तुस्वभावादेव समभिभूतरजस्तमस्तत्त्वमुद्रिक्तसत्त्वं सत्त्वसम्बन्धादेव सात्त्विकसत्त्वं सुतरां सुखयति, कदाचिच्च तदेव हि वस्तुजातं नितरामुद्रिक्तरजःसमभिभूतसत्त्वं, समुद्रिक्तं वा तमः समभिभूतरजःसत्त्वं अप्रशस्तं भवत् तत्तत्सम्बन्धात् सकलानेव लोकानाकुलयति दुःखयत्युद्वेजयति मोहयति श्लथयतीति च सर्व्वानुमतमिति भवतु नाम तद्भौतिकमभौतिकं वा । भौतिकेनैव भौतिकं, अभौतिकेन चाभौतिकं सर्व्वथा सम्बद्धमित्यनियमात् ।

किन्तु शब्दादिकमपि त्रिगुणात्मकतया तत्तद्‌गुणोद्रेकादेव तस्य तस्य च पुरुषस्य सुखे दुःखे मोहे वा भवति कारणम् । तथाच—"तामसानाञ्च रूपाणां"…( च० शा० १।१२३ ), तथा "महतीष्वपि पीडास्वव्यथा दृश्यन्ते सत्त्वगुणवैशेष्यात्"—( च० वि० ८।१९८ ) इत्यादिकमपि गुणत्रयसम्बन्धादेव सङ्गच्छते । इत्थमेव सुश्रुतेऽपि "यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते" ( सु० सू० २४।८ ) इत्यादि ।

एवञ्च सुखकरत्वे दुःखोत्पादकत्वे वा मनसः प्रसङ्गे भौतिकत्वमभौतिकत्वञ्चाकिञ्चित्करमिति सात्त्विकोपादानस्य त्रिगुणात्मकस्यापि मनसो ह्यभौतिकत्वे न नो हानिः । भौतिकमभौतिकं वा वस्तुतत्त्वमभिसन्धाय सत्त्वाद्यंशप्राधान्यादेव सुखदुःखमोहादीनां च व्यवस्थामङ्गीकुर्व्वतां मतं चरकोक्तं "इष्ट" "सुखावहः" इत्यादि पदं सरहस्यं सावधानमवहितं द्रढयत्येव । "मनसोऽर्थानुकूल्याद्धि तुष्टिरूर्ज्जारुचिर्बलम्" ( च० चि० ३०।३३२ ) इत्यपि तथा ।

अत एव मनसः प्रतिकूलं सत् प्रायः पुष्टिकरमपि वस्तु फलोत्पादाय नालम्। रजस्तमश्चाभिभूय ज्ञानविज्ञानादिविमलीकृतमुद्रिक्तसत्त्वं सत्त्वं हि साक्षात् परम्परया वाऽनुकूलं व्यस्तं समस्तं च वस्तु गोचरीकुर्व्वत् स्वस्थमित्यभिधीयते। अत एव कुटीप्रसङ्गे मनसोऽप्यनुकूलत्वेन सत्त्वसम्बन्धात् प्रशस्तवस्तुविन्यासो भगवता चरकेणाऽप्युपदर्शितः। यथा "विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम्। घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम्। शब्दादीनामशस्तानामगम्यां स्त्रीविवर्ज्जिताम्"॥ इत्यादि। अत्राप्रशस्तपदेन स्पष्टमेव प्रतीयते यत् तादृशं शब्दादिकं नूनमुद्रिक्तेन रजसा तमसा वा समनुस्यूततया मानसदोषोपचायकमिति मनसः प्रतिकूलत्वादप्रशस्तम्। सात्त्विकं च शब्दादिकं प्रशस्ततया सत्त्वमनुकूलयत् सुतरां व्याधिपरिपन्थीति भौतिकाभौतिकत्वादिकमकिञ्चित्करमिति प्रागपि समाहितमिति मनसो ह्यभौतिकत्ववादिनः।

इत्थमेव च सुश्रुतेऽपि मनो नेन्द्रियं, नापि भौतिकम्। सौश्रुत्या श्रुत्या तदिदानीं विचार्य्यते। यथा—"अथातः पञ्चेन्द्रियमध्यायं व्याख्यास्यामः" (सु० सू० ३।१।१)। अत्र डल्हणः,—पञ्चेन्द्रियाणि-श्रोत्रादीनि, तेषामर्थाः शब्दादयः···पञ्चग्रहणं कर्म्मेन्द्रियाणां उभयात्मकस्य मनसश्च। कर्म्मेन्द्रियाणां शरीरग्रहणेनैव ग्रहणात्, मनसस्त्विन्द्रियग्रहणेनैव ग्रहणम्; मनोव्यतिरेकेणेन्द्रियाणां विषयग्रहणाभावात्।

अनेन च व्याख्यानप्रसङ्गेनापातत उभयात्मकत्वेन सांख्यैकमत्या आहङ्कारिकमत्र मन इन्द्रियत्वेन प्रतिपादितमिति प्रतीयते, "सत्त्वं रजस्तमश्च मनोरूपतया परिणतं (सुश्रोत० शा० ४।७ ड० टी०) इति व्याख्यानेन च तथैव समर्थितत्वाच्च। एवमेव सुश्रुताभिप्रायं प्रकटयता श्रीमता डल्हणेन स्वमते यदि मन आहङ्कारिकमुभयात्मकमिन्द्रियञ्चेति स्वीकृतं भवेत् तर्हि—"तत्र वैकारिकादहङ्कारात्" (सुश्रुत० शा० १।४) इत्यस्य व्याख्यानावसरे यदुक्तं तेन समं विरोधः स्यात्, यथा—"तान्यहङ्कारादुत्पद्यन्त इति सांख्ये, वैद्यके तु भौतिकानि" इति, तच्छब्दस्य प्रागुक्तप्रकृतवस्तुपरामर्शित्वेन तानीत्यनेन

मनसोऽपि भौतिकत्वमिति लभ्यते, एवञ्च कलाहङ्कारिकत्वमिन्द्रियत्वञ्च मनसः, अन्यत्र च भौतिकत्वमित्युक्त्या विरोधो व्यक्त एव। किञ्च, "समदोषः समाग्निश्च" ( सु० सू० १५।४१ ) इत्यस्य व्याख्यायां—"इन्द्रियाणि भौतिकाधिष्ठानशक्तिरूपाणि, मनस्तु इन्द्रियानुग्राहकमन्तःकरणम्"—इत्यनेन च मनसो नेन्द्रियत्वमभिप्रेतमिति प्रतीयते। "मनोव्यतिरेकेणेन्द्रियाणां विषयग्रहणाभावादि"ति हेतुमुपन्यस्य "मनस इन्द्रियग्रहणेनैव ग्रहणा"दित्याराादुक्तमपि पूर्वोक्तमेव द्रढयतीति सन्देहसन्दोहैर्दोदुल्यत एव मनः।

परन्तु "तन्मयान्येव भूतानि" ( सु० शा० १।१२ ) इत्यस्य "यतोऽभिहितं तत्सम्भवद्रव्यसमूहो भूतादिरुक्तः" ( शा० १।३० ) "भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः" ( शा० १।१४ ) इत्यादीनां व्याख्यानभङ्ग्या मनसो भौतिकत्वमिन्द्रियत्वञ्च न प्रतीयते, पञ्चानामेवेन्द्रियाणां तदर्थानाञ्च तत्रोल्लेखात्, मनसस्तत्र तत्र परित्यागाच्च।

ततश्च मनसो भौतिकत्वमिन्द्रियत्वेन हेतुना ( मनो भौतिकमिन्द्रियत्वात् ), मनोऽर्थानाञ्च भौतिकत्वमिन्द्रियार्थत्वहेतुना ( मनोऽर्था भौतिका इन्द्रियार्थत्वात् ) साधयितुं न शक्यते विविधहेत्वाभाससद्भावात्।

तथा च मनसि भौतिकत्वरूपसाध्याभावाद्बाधः ( सत्प्रतिपक्षश्च ), इन्द्रियत्वरूपहेतोरभावात् स्वरूपासिद्धिः, मनो नेन्द्रियममौतिकत्वादित्यादि ( आयुर्वेदमते ) विपरीतानुमानसद्भावश्च। तथैव मनोऽर्थेऽपि ; मनोऽर्थे हि ज्ञानादौ भौतिकत्वासत्त्वात् निरुक्तयुक्त्या इन्द्रियार्थत्वाभावाच्चेत्यादिकं सहजत एवोहनीयम्।

यदि नाम मनो भौतिकं, तर्हि कुतः कुतो भूतात् कथङ्कारञ्च समुत्पन्नमिति सौश्रुत्या श्रुत्या वैद्यहृद्यं किमप्यनूद्यानवद्यं वक्तव्यम्? परम्पराप्राप्तमिति चेत्? केयं परम्परा किंमूला चेति प्रतिपादनीयम्? निर्विवादप्रमाणमनपेक्ष्य श्रद्धामात्राराद्धपरम्परायां न कस्यापि दरोऽप्यादर इति सर्व्वानुमतत्वात्। युक्त्या चेत्? केयमव्यभिचारिणी युक्तिः सा वाच्या? परन्तु वैद्यतन्त्रे सुदुर्लभा। मनो न भौतिकं नापीन्द्रियमिन्द्रियानुग्राहकमात्रमिति प्रतिपादितेन सुश्रुत-

स्वारस्येन डल्हणोद्धाटितेन सौश्रुतरहस्येन वाधिताया यस्याः कस्याश्चन युक्तेरयुक्तत्वात्।

"सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते" इति न्यायात् चरकैकवाक्यतया सुश्रुतेऽपि मनो नेन्द्रियं नापि भौतिकं परन्त्वाहङ्कारिकं समुद्भूतसत्त्वं सत्त्वाख्यं त्रिगुणात्मकमिति प्रतीयते। चरकीयानेकप्रमाणैरनेकैश्चोहापोहैः प्रमाणितस्य तस्य तथैव चरके प्रतिपादितत्वात्।

अपि च भूतभौतिकसृष्टौ ( सु० शा० १।२२ ) प्रकृतिपरिणामभूतानां भूतानामाकाशादीनां भौतिकानाञ्च पृथिव्यादीनां पञ्चानामेव लक्षणादिक-मभिहितवता भगवता श्रीमता सुश्रुतेन "वैद्यके तु स्वाभावमीश्वरं..." ( शा० १।११ ) इत्यादिना "इत्येके" इत्यन्तोक्तं सर्व्वं ( शा० १।१० ) एकीयं सांख्यीयमतं प्रदर्श्य मूलप्रकृतौ तु तन्मतं विशेषतो विप्रतिपादितम्। अन्यच्च सर्व्वं प्राय एकप्रकारकमेव पञ्चेन्द्रियाणां श्रोत्रादीनां तद्विषयाणाञ्च शब्दादीना-मायुर्व्वेदे वर्णनामात्रविषयत्वेन भौतिकत्वं—मनसोऽनिन्द्रियत्वञ्च विहाय।

अन्यथा मनसोऽपीन्द्रियत्वे भौतिकत्वे च—"भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः"—( शा० १।१४ ) इत्यनुशासनात् मनोऽर्थानामात्म-निग्रसुखदुःखज्ञानादीनां चिन्त्यमानान्तर्गतभौतिकातिरिक्तानामपि भौतिकत्व-प्रसक्त्या केनापि क्वचिदपि कदाप्यश्रुतपूर्व्वानभ्युपगताभ्युपगमे तत्र च प्रेक्षावता-मुपेक्षैवापेक्षिता स्यात्।

पूर्व्वप्रतिपादितविषयाणां प्रामाण्योपपत्तये स्वारस्यप्रतिपादनाय चेदानीं भूतग्राममधिकृत्य सौश्रुती वार्त्ता तावदावर्ण्यते। "तद्गुणान्येव भूतानि तद्गुणान्येव चादिशेत्। तैश्च लक्षणतः कृत्स्नो भूतग्रामो व्यजन्यत"। "तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा। भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते"॥ ( सु० १२।१३ ), "यतोऽभिहितं तत्सम्भवद्रव्य-समूहो भूतादिरुक्तः" ( सू० १।३८ ), "भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः" ( सु० शा० १।१२ )।

अत्र डल्हणः—एकीयमतेन कारणानुरूपं कार्य्यमित्यादिवाक्यात् कारण-

मयत्वं कार्य्यस्य प्रतिपाद्य स्वमतेऽपि कारणमयत्वं प्रतिपादयन्नाह—तन्मयानि अवकाशचलोष्णद्रवखरस्वभावादिधर्म्मविशेषाक्रान्तप्रकृतिपरिणाममयानि भूतान्याकाशादीनि, ( अत्र मनस्युक्तम् ) । ( क्रमशः )

---



# मुक्तधारा

( कविसार्वभौम-रवीन्द्रनाथ-विरचित-'मुक्तधारा'-नाटकस्य संस्कृतानुकल्पनम् )

[ अनुकल्पकः श्रीध्यानेशनारायणचक्रवर्त्ती, साहित्यशास्त्री, एम्. ए. ]

( पूर्वानुवृत्ता )

[ उत्तरकूटस्य नागरिका उत्सवार्थं मन्दिरं गच्छन्ति । ]

( विभूतिं दृष्ट्वा )

प्रथमो नागरिकः—भो यन्त्रराज, चतुरोऽसि त्वम् । कदा तु चातुरीवलेन प्रागेव समागतोऽसि इति किञ्चिदपि मया न ज्ञातम् ।

द्वितीयः—तस्मिन् कर्मणि तु स चिरमेव अभ्यस्तः । अन्तरालमधिष्ठाय शनैः शनैः प्रसृत्य कदा स सर्वान् अतिक्रम्य गच्छतीति न ज्ञायते । सोऽसौ अस्माकं चवुयाग्रामस्य मुण्डितो विभूतिः, अस्माभिः साकमेव कैलासगुरुसकाशात् कर्णपीड़नमनुप्राप्य कदा तु अस्मान् सर्वानतिक्रम्य ईदृशं सुमहत कार्यं साधितवान् !

तृतीयः—रे गव्रो, मञ्जूषाहस्तः कथं विमूढो दण्डायमानस्तिष्ठसि? प्रत्यत्ततः किं विभूतिस्त्वया न कदापि दृष्टः? आनीयन्तां माल्यानि, तैर्भूषयामि तावत् ।

विभूतिः—आस्तां तावत् । नातः परं प्रयोजनम् ।

तृतीयः—नातः परं किम्? अकस्मात् त्वमतीव महान् एव संवृत्तः । अतो यदि ते ग्रीवादेशः उष्ट्रकण्ठमिव सुदीर्घः अभविष्यत्, उत्तरकूटवासिनश्च सर्वे सम्मिलिताः सन्तस्तव कण्ठोपरि माल्यभारं समार्पयिष्यन्, तदा तु सुष्ठु एव अभविष्यत् ।

द्वितीयः—भ्रातः, ढक्कावादनकारी हरिशस्तु नाधुनापि समागतः।

प्रथमः—दुष्टोऽसौ अलसानां नायकः—तस्य पृष्ठचर्मणि यदि ढक्काघातः प्रदीयते, तदा—

तृतीयः—अलमनेन। ढक्कायां तालप्रदाने तस्य हस्तौ अस्मत्-करयुगलात् दृढतरौ।

चतुर्थः—सामन्तस्य विश्वस्य रथं संप्रार्थ्य समानीय अद्य मे अग्रजोपमस्य विभूते रथयात्राम् उद्यापयिष्यामि इति मे मनसि प्रकल्पितमासीत्। किन्तु श्रूयते नरपालोऽपि पदव्रजेनाद्य मन्दिरं गमिष्यति।

पञ्चमः—साधु साधु। सामन्तस्य रथस्य या खलु दशा। स हि रथो दशरथकल्पः—अकस्मात् मार्गमध्ये दशधा विभक्तो भवति।

तृतीयः—हाः हाः हाः! दशरथम्। अस्माकं लम्बुः प्रायशः सुष्ठु भणति। दशरथम्!

पञ्चमः—किं मया विना कारणमेव ईदृशमुच्यते। पुत्रस्य मे विवाहकाले तं रथं संप्रार्थ्य अहम् आनीतवान्। यावदारोहितं, तस्मादधिकतरं कृतं रज्जु--समाकर्षणम्।

चतुर्थः—तावत् क्रियतामिदम्। विभूतिं स्कन्धोपरि संस्थाप्य नयामः।

विभूतिः—अरे, अरे; किं क्रियते, किं क्रियते!

पञ्चमः—नहि, नहि, इदमेव काम्यते। उत्तरकूटस्य क्रोडे तव जन्मग्रहणम्। अपि तु, त्वमद्य तस्य स्कन्धदेशं समारूढोऽसि। किञ्च, मस्तकं ते सर्वान् अतिक्रम्य ऊर्द्ध्वं गच्छति।

[ स्कन्धोपरि दण्डान् सज्जीकृत्य तदुपरि विभूतिम् उत्तोल्य ]

सर्वे—विजयतां यन्त्रराजो विभूतिः। विजयतां यन्त्रराजो विभूतिः।

( गानम् )

यन्त्राय नमो नमः, यन्त्राय नमो नमः, नमामो यन्त्र।
चक्रमुखर-मन्द्रितस्त्वं हे वज्रवह्निवन्दित।
त्वं वस्तु-विश्व-वक्षोदंशः हे ध्वंस-विकट-दन्त॥

त्वं दीप्त-वह्नि-शत-शतघ्नी-विघ्न-विजय-पन्थः (?)।
लौहगलन-शैलदलनस्तवाचल-चलनो मन्त्रः ॥
कदा काष्ठेष्टक-लोष्ट्रकदृढ-घन-पिनद्ध-काया ।
भूतल-जल-व्योममण्डल-लङ्घनलघु-माया ॥
तव खनि-खनित्र-नख-विदीर्णा क्षितिविकीर्णान्त्रा ।
तव पञ्चभूत-बन्धनकरा इन्द्रजालतन्त्राः ॥

[ विभूतिना साकं सर्वे प्रस्थिताः । उत्तरकूटाधिपतिः रणजित् तस्य च मन्त्री शिविरसन्निवेशात् मञ्चं प्रविशतः । ]

रणजित्—शिवतलस्य प्रजागणान् केनाप्युपायेन वशीकर्तुं नाशक्नोस्त्वम् । व्यतीतेषु एतेषु दिनेषु मुक्तधाराजलमायत्तीकृत्य तान् वशीकर्त्तुमुपायो विभूतिना प्रदर्शितः । किन्तु, मन्त्रिन्, त्वयि तु तावत् न लक्ष्यते तादृशः समुत्साहः । किमत्र ईर्ष्याकारणम् ?

मन्त्री—महाराज, क्षमस्व माम् । खनित्र-कुद्दालकहस्तेन मृत्तिकाप्रस्तरेण सह द्वन्द्वयुद्धं नास्माकं कार्यम् । राष्ट्रनीतिरेव अस्माकमस्त्रम् ; मनुष्यमानसैस्तु अस्माकं व्यवहारः । शिवतलस्य शासनभारो युवराजोपरि समर्पणीय इति मन्त्रणा मयैव प्रदत्ता । तेनैव यद्बन्धनं सुरचितमभविष्यत्, न खलु तत् नगण्यम् ।

रणजित्—तेन किं फलं प्राप्तम् ? वर्षद्वयं यवत् राजस्वं तैर्न प्रदत्तम् । ईदृशं दुर्भिक्षं तत्र सदैव संघटते । तेन तु न भवति राजस्वं कदाप्यलब्धम् ।

मन्त्री—राजस्वादपि महार्घं किञ्चित् संलभमानमासीत्—एतस्मिन्नेव समये तस्य प्रत्यावर्तनं भवता समादिष्टम् । राजकार्ये क्षुद्रास्तु कदापि नावज्ञेयाः । जानीहि तावत्, यदा असहनीया अवस्था सञ्जायते, तदा दुःखस्यैव शक्त्या क्षुद्रास्तु अतिक्रम्य महान्तो भवन्ति महत्तराः ।

रणजित्—मन्त्रणायास्ते सुरालापनं प्रतिक्षणमेव परिवर्तते । कतिवारान् त्वया उक्तं—यत् ऊर्द्ध्वमारुह्य अधोदेशीयानां परिपीडनम् अनायासकरम् ; अपि तु वैदेशिकानां प्रजानां तादृशं पीडनमेव राजनीतिः । किं त्वया नैतदुक्तम् ?

मन्त्री—उक्तमेव मया। तदा तु अवस्था नैतादृशी आसीत्। कालानुकूलाऽभूत् मदीया मन्त्रणा। अधुना तु—

रणजित्—युवराजं शिवतले प्रेषयितुं नासीन्मे प्रक्षीणापि वासना।

मन्त्री—कथं महाराज ?

रणजित्—ये खलु प्रजाजना विदूरवर्तिनस्तान् निकषा यदि पुनः पुनर्गत्वा हार्दिकः सम्बन्धः स्थाप्यते, तदा तु तिरोहिता भवति तेषां भीतिः। प्रीतिप्रदर्शनेनैव प्राप्यते आत्मजनः, इतरो गृह्यते भीतिप्रदर्शनेन।

मन्त्री—प्रभो, युवराजस्य शिवतलप्रेषणे मौलिकं कारणं भवता विस्मृतम्। कति दिनानि यावत् तस्य मनस्तु व्याकुलं दृष्टम्। सञ्जातश्चास्माकं सन्देहो यत् राजप्रासादे नैव तस्य जन्म, मुक्तधारानाम्नी या खलु निर्भरिणी तस्यास्तटदेशादेव अजातकुलशीलोऽसौ समानीत इति केनापि सूत्रेण तेन परिज्ञातम्। अतस्तं विस्मारयितुं—

रणजित्—तत्तु जानामि। इदानीन्तु, स प्रायश एव रात्रौ निःसङ्ग एव निर्भरं निकषा गत्वा अशेत। वार्तां प्राप्य एकदाहं रात्रौ तत्र गतवान्, पृष्टवांश्च तं—वत्स अभिजित्, किं ते जातम्, कथमत्रैव अवस्थीयते ? तेन प्रत्युक्तम्—अस्य जलस्य कलध्वनौ मदीयां मातृभाषामहं शृणोमीति।

मन्त्री—अहं तं पृष्टवान्—युवराज, किं ते जातम् ? राजप्रासादे कथं प्रायशस्त्वं नाधुना दृश्यसे ? तेनोक्तं--पृथिव्यां पथिरचनार्थमेव आगतोऽस्मीति वार्ता मया सम्प्राप्ता।

रणजित्—आयुष्मतस्तस्य राजचक्रवर्तिलक्षणं विद्यत इति विश्वासो मे तिरोभवति।

मन्त्री—येन खलु अस्य दैवलक्षणस्य वार्ता घोषिता, तत्रभवान् अभिरामस्वामी तु महाराजस्य गुरोरपि गुरुः।

रणजित्—तत्रभवता प्रमादः कृतः। तत्प्रसङ्गस्तु केवलं क्षतिं साधयति। शिवतलस्य पशुलोमानि यथा विदेशस्य हट्टेषु न वहिर्गच्छेयुः, एतदर्थमेव पितृपितामहानां शासनकालादारभ्य निरुद्धो नन्दिसंकटस्य पन्थाः।

अभिजित् तमेव पन्थानम् उन्मोचयति। अनेन उत्तरकूटस्य अन्नवस्त्राणि भविष्यन्ति दुर्मूल्यानि।

मन्त्री—यतो वयसा नवीनः, युवराजः केवलं शिवतलादेव—

रणजित्—अपि तु, स्वजनानां विरुद्धे एवायं विद्रोहः। धनञ्जयनामधेयः शिवतलस्य यः खलु सन्न्यासी प्रजाजनान् समुत्तेजयति, तस्यैव पक्षे नूनं सोऽपि वर्तते। इदानीं कण्ठमण्डितस्य तस्य कण्ठदेशः पेषणीयः। स खलु कारारुद्धः करणीयः।

मन्त्री—महाराजानुशासनस्य प्रतिवादे नास्ति मे साहसम्। इदन्तु ज्ञायते भवता यद् ईदृशा दुर्योगाः दृश्यन्ते, येषां रोधकरणात् मोचनमेव वरम्।

रणजित्—भवतु, तस्मिन् विषये मा चिन्तय।

मन्त्री—नाहं चिन्तयामि। किन्तु, महाराज एव चिन्तयतु एतदेव मे प्रार्थनम्।

[ प्रतिहारी प्रविशति ]

प्रतिहारी—अदूरे तिष्ठति मोहनगृहस्य राजपितृव्यो विश्वजित्।

[ प्रस्थानम् ]

रणजित्—अपरः सोऽसौ। अभिजितः कलुषणे स एव नायकः। आत्मीयरूपी अनात्मीयस्तु मनुष्यककुद् इव। पश्चात् संलग्नः स्थास्यति, छेत्तुमपि न शक्यते, वहनमपि क्लेशकरम्। कुतः शब्दोऽयम्?

मन्त्री—भैरवसाधकाः मन्दिरप्रदक्षिणार्थं वहिर्गताः।

( भैरवसाधकानां प्रवेशो गानञ्च )

तिमिर-हृद्‌विदारण<br>
ज्वलदग्नि-निदारुण<br>
मरुश्मशान-सञ्चर<br>
शंकर हे शंकर!

वज्रघोषा तव वाणी
हे रुद्र शूलपाणे
मृत्यु-सिन्धु-सन्तर
शंकर हे शंकर ।

( प्रस्थानम् ) ( क्रमशः )

---

## गीताञ्जलि-प्रतिच्छाया

( रवीन्द्रनाथस्य गीताञ्जलेः संस्कृतानुवादः )

[ अनुवादकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्ता )

( १६ )

आषाढसन्ध्या समुपैति सन्निधिं
प्रायेण यातो लयमेष वासरः ।
वृष्ट्यम्बुधारा परिमुक्तबन्धना
चरत्यहो सान्तरमन्तरान्तरा ।

आसीन एकोऽस्मि गृहैकदेशे
स्वेनात्मना किञ्चन चिन्तयामि ।
यूथीवने नीरनिषिक्तवातः
सरत्यहो कां नु कथां विवृण्वन् ।
वृष्ट्यम्बुधारा परिमुक्तबन्धना
चरत्यहो सान्तरमन्तरान्तरा ।
सञ्चारितो वीचिचयोऽद्य मानसे
नान्विष्य कूलं मयकाधिगम्यते ।

घनाम्बुसंसिक्तवनप्रसूनकं
स्वसौरभैः क्रन्दयतीव मानसम् ।
तमस्विनीयामचयं समुद्गतं
केन स्वरेणाद्य करोमि पूरितम् ।
कुतो नु मोहात् सकलं हि विस्मरन्
अद्याकुलान्तःकरणो वसाम्यहम् ।
घनाम्बुधारा परिमुक्तबन्धना
क्षरत्यहो सान्तरमन्तरान्तरा ।

( २० )

अद्य, वात्यामयनिशि भवदभिसारः
प्राणप्रियतम ! मम सखिसार !
निहताशमिव क्रन्दति गगनं
न भजति निद्रां मामकनयनम् ।
प्रियतम ! परमुन्मोच्य द्वारं
पर्य्यालोके वारं वारम् ।
प्राणप्रियतम मम सखिसार !
न वहिरभिवीक्ष्यते किञ्चिदपि संस्थितं
क्व तव स्रुतिरिति मनसि भवति मम भावितम् ।
दूरतटिनीतटे क्व घनवनपार्श्वतः
क्वाथवा गहनतमतिमिरे
परमसख ! मित्र मम पतसि पथिपारे ।

( २१ )

वेद्मि वेद्मि कुतोऽप्यादिकालान्ननु मां व्यधाः
जीवनकस्रोतसि हे संप्लवनव्यापृतम् ।
सहसा प्रिय कियति गृहे कियति च पथि हर्षणं
मदीयचेतसः कियन्न्यस्य गतः शोभितम् ।

कतिकृत्वस्त्वं घनान्तराले
स्थित इत्थं यन् सुमधुरहासं
चरणं न्यदधास्त्वमरुणकिरणे
भाले प्रादाः शुभसंस्पर्शम् ।
आस्ते चितमिह मामकनयने
कतिरूपेक्षणमरूपशरणे
कियति हि काले कियति हि लोके
कियति च नवनवललितालोके ।
कतियुगकालं वेत्ति न कश्चित्
कियति प्रेमसुखासुखगाने
अमृतस्य कियद्रसवर्षणकं
समुदितमभवन्मानसपूरम् ।

( २२ )

त्वं, गीतकलानिधे ! कथं गायसि हे कलं
सुविस्मितः शृणोम्यहं शृणोमि केवलम् ।
स्वरप्रभा जगत् समश्नुते
स्वरानिलो वहति नभःपथे
प्रस्तरकं त्रुट्यति हि द्रुतं विषमवेगवलम्
वहतितरां स्वरसुरनिम्नगा चलम् ।
प्रगातुमिच्छामि तथा स्वरैरहं
कण्ठे नान्विष्य लभे मम स्वरम् ।
विवक्षामि किन्तु, कथा कथोद्यमे प्रबाधिता
पराजितं हृन्मम हा विरोदिति,
मां न्यदधाः किंविधकूटजालके
मां परितो वयन् स्वरानायमिति ।

---

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs. 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed, by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 ( for members). Out of stock

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs, 2 ; Rs. 1·50 ( for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 n.P ·62 n.P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., ·50 n.P

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4·5c n.P ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 n·P ; Re. 1·25 n.P ( for members ).

27. **Manavaka-gauravam**—(Drama) by M M Kalipada Tarkacharya, Rs. 2·50 n.P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya. Rs. 1·50 n.p and 1·25 n.p (for members).

29. **Brahmana-Sarvasva**—(A Pre-Sayana Vedic Commentary) of Halayudha, Ed. Prof. Durgamohan Bhattacharya. Rs. 25/-

---

*Sanskrit Sahitya Parishad Series No. 29*

# BRĀHMAṆA-SARVASVA

## ( A Pre-Sāyaṇa Vedic Commentary )

*By*

## HALĀYUDHA

EDITED WITH INTRODUCTION, CRITICAL NOTES, INDICES & APPENDICES

*By*

PROF. DURGAMOHAN BHATTACHARYYA

*Price Rs. 25/-*

*Published by:—*

SANSKRIT SAHITYA PARISHAD

168/1, RAJA DINENDRA STREET,
CALCUTTA—4.

---



---

Printed by Bishnupada Bhattacharyya M. A. Kāvyatirtha, at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Calcutta—4.

